*The Adyar Library Series No. 43*

GENERAL EDITOR:

G. SRINIVASA MURTI, B.A., B.L., M.B. & C.M., VAIDYARATNA

*Director, Adyar Library*

# SAṄGĪTARATNĀKARA OF SĀRṄGADEVA

WITH TWO COMMENTARIES

**Vol. II—Adhyāyas 2—4**

# SAṄGĪTARATNĀKARA

OF

# S'ĀRṄGADEVA

WITH

KALĀNIDHI OF KALLINĀTHA AND
SUḌHĀKARA OF SIṀHABHŪPĀLA



EDITED BY

PANDIT S. SUBRAHMANYA SASTRI





Vol. II—Adhyāyas 2—4



THE ADYAR LIBRARY

1944

# INTRODUCTION

It is a matter of deep gratification to the Adyar Library to have been able to present this second volume of the edition of the *Saṅgītaratnākara*, so soon after publishing the previous volume less than a year ago. This volume contains three chapters, dealing with *Rāga*, *Prakīrṇaka* and *Prabandha*. The plan followed in this volume is the same as in the previous. There is a consolidated index of verses contained in the three chapters included in this volume. There is also given a detailed list of contents.

The only point that I have to notice here is the fact that in one manuscript of Siṃhabhūpāla's commentary, the colophon assigns the work to some other person patronised by some king other than Siṃhabhūpāla. I give the colophon below:

इति श्रीनर्मदातटाधीश्वरनन्दपुरिवास्तव्यमहाराजाधिराज श्रीगोपीनाथधर्माधिकारीभट्टश्रीनागनाथसुतश्रीगङ्गाधरविरचितायां संगीतरत्नाकरटीकायां संगीतसुधाकराख्यायां प्रकीर्णकाध्यायस्तृतीयः ॥

But this variation is found only in one of the manuscripts and even in this manuscript, it is noticed only in the case of two Chapters, namely, Chapters I and II and not in the case of all the Chapters.

Having regard to the details in the introductory portion of the commentary, as published in the first volume, and the uniform colophon except in one manuscript, added to the fact that even in this one manuscript, the work is assigned to Siṃhabhūpāla in most of the Chapters, there is only one alternative left, and that is to ignore the variant colophon and to accept the commentary as written by that king. But it is necessary to bring this fact to the notice of scholars. The variation is found in the manuscript secured from the Oriental Library, Baroda.

The edition is brought out on the basis of the press-matter got ready by the late Pandit S. Subrahmanya Sastri. Mr. K. Ramachandran who worked under that renowned Pandit in the preparation of the press matter, has corrected the proofs and passed the entire matter through the press. I have also looked into the proofs and passed them. The index at the end and the detailed contents preceding the text portion are both prepared by Mr. Ramachandran. On behalf of the Library, I acknowledge my indebtedness to him, and also to the Vasanta Press for the prompt way in which the book has been printed. The Library had to face considerable difficulties in securing paper for the printing of this work. It is hoped that the subsequent volumes can be issued without any undue delay.

*Adyar Library,*
10 February, 1944

C. KUNHAN RAJA

# विषयसूची

[प्रकरणानां पुटसंख्यया निर्देशः । प्रकरणस्थविषयाणां तु श्लोकसंख्यया]

पुटाङ्काः

पुटाङ्काः

१३२-; करणप्रबन्धः, तस्य भेदाः १३३—१४५; ढेङ्कीप्रबन्धः १४६—१५२-; वर्तनीप्रबन्धः १५३—१५५; झोम्बडप्रबन्धः १५६—१६९; लम्भकप्रबन्धः १७०—१७५-; रासकप्रबन्धः १७६—१८०; एकतालीप्रबन्धः १८१-; वर्णप्रबन्धः -१८२; वर्णस्वरप्रबन्धः -१८३—१८४; गद्यप्रबन्धः १८५—१९९; कैवाडप्रबन्धः २००-; अङ्कचारिणीप्रबन्धः २०१—२०४-; कन्दप्रबन्धः २०५—२०९-; हयलीलाप्रबन्धः २१०—२१२-; गजलीलाप्रबन्धः -२१३, २१३-; द्विपदीप्रबन्धः २१४—२१९-; चक्रवालप्रबन्धः २२०, २२१; क्रौञ्चपदप्रबन्धः २२२; स्वरार्थप्रबन्धः २२३, २२४; ध्वनिकुट्टनीप्रबन्धः २२५-; आर्याप्रबन्धः २२६—२३१; गाथाप्रबन्धः २३२-; द्विपथप्रबन्धः २३३—२४१; कलहंसप्रबन्धः २४२, २४३; तोटकप्रबन्धः २४४, २४५; घटप्रबन्धः २४५-; वृत्तप्रबन्धः, २४६, २४७-; मातृकाप्रबन्धः २४८—२५२; रागकदम्बप्रबन्धः २५३—२५५; पञ्चतालेश्वरप्रबन्धः २५६—२६३-; तालार्णवप्रबन्धः -२६४; श्रीरङ्गश्रीविलासप्रबन्धौ २६५; पञ्चभङ्गिपञ्चाननोमातिलकप्रबन्धाः २६६; त्रिपदीप्रबन्धः २६७—२६९-; चतुष्पदीप्रबन्धः -२७०, २७१; षट्पदीप्रबन्धः २७२, २७३; वस्तुप्रबन्धः २७४, २७५-; विजयप्रबन्धः २७६; त्रिपथप्रबन्धः २७७; चतुर्मुखप्रबन्धः २७८; सिंहलीलप्रबन्धः -२७९; हंसलीलप्रबन्धः -२७९; दण्डकप्रबन्धः -२८०; झम्पटप्रबन्धः २८१; कन्दुकप्रबन्धः २८१; त्रिभङ्गिप्रबन्धः -२८२, २८३-; हरविलाससुदर्शनप्रबन्धौ -२८४; स्वराङ्कप्रबन्धः २८५; श्रीवर्धनप्रबन्धः -२८६, २८७; वदनप्रबन्धः २८८-; चच्चरीप्रबन्धः २८९—२९१; चर्याप्रबन्धः २९२, २९३; पद्धडीप्रबन्धः २९४; राहडीप्रबन्धः २९५; वीरश्री-

---



शिवाभ्यां नमः

श्री-निःशङ्कशार्ङ्गदेव-प्रणीतः

# संगीतरत्नाकरः

चतुरकल्लिनाथ-विरचितया कलानिध्याख्यटीकया सिंहभूपाल-विरचितया संगीतसुधाकराख्यटीकया च समेतः

## द्वितीयो रागविवेकाध्यायः

### तत्रादिमं ग्रामरागोपरागरागभाषाविभाषाऽन्तरभाषाविवेकाख्यं प्रकरणम्

अथ ग्रन्थेन संक्षिप्तप्रसन्नपदपङ्क्तिना ।
निःशङ्को निखिलं रागविवेकं रचयत्यमुम् ॥ १ ॥

(क०) स्वरगतप्रतिपादितजातिजन्यत्वेन प्रसक्तान्ग्रामरागादींस्तदनन्तरं विवेक्तुं प्रतिजानीते—अथ ग्रन्थेनेति । संक्षिप्तप्रसन्नपदपङ्क्तिना ; प्रसन्नानि शीघ्रं स्वाभिधेयबोधकानि च तानि पदानि, तेषां प्रसन्नपदानां पङ्क्तयो वाक्यानि, संक्षिप्ताः संकुचिताः प्रसन्नपदपङ्क्तयो यस्मिन्निति । अयमर्थः—बृहद्देश्यादिषु ग्रन्थान्तरेषु यत्र 'षड्जो न्यासः, षड्जो ऽंशकः', इत्यादिभिर्बहुभिर्वाक्यैर्यो ऽर्थो ऽभिहितः स एवात्र 'षड्जमहांशन्यासो

ऽयम्' इत्यादिभिः प्रसन्नैः कतिपयैर्वाक्यैरभिधीयत इति । अथ वा, संक्षिप्तानीति पदविशेषणम्; तेषां पङ्क्तयो यस्मिन्निति व्यधिकरणो बहुव्रीहिः; पदानां संक्षिप्तत्वं नाम ग्रन्थान्तरेषु 'षड्जग्रहांशन्यासः' इत्याद्युक्तेरत्र 'साद्यन्तः' इत्यादिना ऽभिधानम् । यथायोगमुभयथा ऽपि योजनीयम् । एवंभूततया ऽऽत्मना क्रियमाणेन ग्रन्थेन निखिलं समस्तं रागविवेकम्, रागाणां दशविधानां विवेको ऽसंकीर्णतया परस्परभेदः, तं रचयति निबध्नाति। अमुमित्यनुपदं वक्ष्यमाणस्य बुद्ध्यारूढतया पुरोवर्तिना रूपेण निर्देशः । निःशङ्को ऽहमनुपदमेव रागविवेकं रचयामीति संसृष्टो ऽर्थः । दशविधानामेतेषां रागत्वं रञ्जनात् । रञ्जनं च रज्यते येन जनचित्तमिति करणव्युत्पत्त्या वा जनचित्तानि रञ्जयतीति कर्तरि वा 'अकर्तरि च कारके संज्ञायाम्' इति सूत्रेण कर्तर्यप्यभ्यनुज्ञानादुभयार्थो घटत इत्यभिसंधायोक्तं मतङ्गेन । यथा—

"स्वरवर्णविशिष्टेन ध्वनिभेदेन वा पुनः ।
रज्यते येन सच्चित्तं स रागः संमतः सताम् ॥
अथ वा, यो ऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥" इति ।

स एव रागशब्दस्य रूढत्वादिना प्रयोगमप्याह—

"अश्वकर्णादिवद्रूढो यौगिको वा ऽपि मन्थवत् ।
योगरूढो ऽथ वा रागो ज्ञेयः पङ्कजशब्दवत् ॥" इति ।

रागशब्दस्य केवलरूढत्वं तु येन केनचिद्रागेण यः कश्चन न रज्यते तं प्रति तस्यारञ्जकत्वात् 'अयं रागो मह्यं न रोचते' इति तद्वाक्यप्रयोगे द्रष्टव्यम् ॥ १ ॥

(सु०) रागविवेकं विवक्तुं प्रतिजानीते—अथेति । निःशङ्क इति बिरुदालंकृतः श्रीशार्ङ्गदेवः संक्षिप्तप्रसन्नपदसमूहेन ग्रन्थेन रागविवेकं करोति—रागाणां

पञ्चधा ग्रामरागाः स्युः पञ्चगीतिसमाश्रयात् ।
गीतयः पञ्च शुद्धा च भिन्ना गौडी च वेसरा ॥ २ ॥
साधारणीति शुद्धा स्यादवक्रैर्ललितैः स्वरैः ।
भिन्ना वक्रैः स्वरैः सूक्ष्मैर्मधुरैर्गमकैर्युता ॥ ३ ॥
गाढैस्त्रिस्थानगमकैरोहाटीललितैः स्वरैः ।
अखण्डितस्थितिः स्थानत्रये गौडी मता सताम् ॥ ४ ॥
ओहाटी कम्पितैर्मन्द्रैर्मृदुद्रुततरैः[1] स्वरैः ।
हकारौकारयोगेण हृन्न्यस्ते[2] चिबुके भवेत् ॥ ५ ॥

विवेको विभागः । विभाग इत्युपलक्षणं लक्षणस्यापि वक्ष्यमाणत्वात् । येन रागतत्त्वज्ञानं तत्कथयतीत्यर्थः । तत्र रागलक्षणं रागशब्दव्युत्पत्तिश्च कथिता मतङ्गेन—

"यो ऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥
रञ्जनाज्जायते रागो व्युत्पत्तिः समुदाहृता ।
अश्वकर्णादिवद्रूढो यौगिको मण्डपादिवत् ॥"

इति । संगीतसमयसारकारेणाप्युक्तम् —रञ्जयतीति रागः ।

'स्वरवर्णविशिष्टेन ध्वनिभेदेन वा पुनः ।
रज्यते येन सच्चित्तं स रागः संमतः सताम् ॥'

इति । ते च रागा दशप्रकारा ग्रामरागा उपरागा रागा भाषा विभाषा अन्तरभाषा रागाङ्गाणि भाषाङ्गाणि क्रियाङ्गाण्युपाङ्गानीति ॥ १ ॥

(क०) तत्रादौ ग्रामरागाः पञ्चविधगीतिभेदाश्रयणेन पञ्चधा भिद्यन्त इत्याह—**पञ्चधा ग्रामरागाः स्युरिति** । ताः पञ्च गीती-

[1] ०द्रुतद्रुततरैः
[2] हृदिस्थे.

रुद्दिशति—**गीतय इति**। क्रमेण तासां लक्षणान्याह—**शुद्धा स्यादित्या-दिना**। अवक्रैर्ऋजुभिः, समैरित्यर्थः। ललितैर्मनोहरैः स्वरैर्युक्तत्वात्तदर्थतया शुद्धा स्यात्। वक्रैर्विषमैः, अत एव सूक्ष्मैर्द्रुतोच्चारितैः स्वरैर्मधुरैर्गमकैश्च वक्ष्यमाणेषु पञ्चदशसु गमकेषु वक्रसूक्ष्मस्वरोचितत्वान्मधुरैः श्राव्यैः स्फुरितादिभिर्गमकैश्च युता, वक्रसूक्ष्मस्वरत्वाद्भिन्नेत्यर्थः। गाढैर्निबिडैः, त्रिस्थानगमकैर्मन्द्रमध्यतारेषु प्रयुक्तैर्यथोचितैर्गमकैः, ओहाटीललितैरोहाट्या ललितैः स्वरैश्च स्थानत्रयेऽखण्डितस्थितिरविच्छिन्नावस्थाना 'गीतिर्गौडीति सतां मता। ओहाटीति लक्षणनिरुक्तिः। चिबुके हृद्यस्ते सतीति मन्द्रस्वरपरंपराप्रयोगे प्रयत्नोक्तिः। हकारौकारयोगेणोपलक्षितैः, तदा हका-रौकारानुकारप्रतीतिर्भवति, न तु साक्षात्तावेवोच्चारणीयावित्यर्थः। एते-नौकारहकारावटति गच्छतीत्योहाटीपदनिरुक्तिः सूचिता। एवं प्रयत्ने क्रियमाणे मृदु कोमलं यथा भवति तथा द्रुततरैरधराधरं शीघ्रैः कम्पितैः कम्पिताख्यगमकयुक्तैर्मन्द्रैः स्वरैरोहाटी भवेदिति लक्षणार्थः। गौडप्रिय-त्वाद्गौडीति संज्ञा ऽवगन्तव्या॥ २–५॥

(सु०) तत्र ग्रामरागान्विभजते—**पञ्चधेति**। ग्रामरागाः पञ्चप्रकारा भवन्ति। केन विशेषेण तेषां पञ्चप्रकारत्वम्? अत आह—**पञ्चगीतिसमा-श्रयादिति**। कास्ताः पञ्च गीतय इत्यपेक्षायामाह—**गीतयः पञ्चेति**। शुद्धा भिन्ना गौडी वेसरा साधारणीति पञ्च गीतयः। भरतेन मागध्यादयश्चतस्रो गीतय उक्ताः। यदाह—

"प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी।
संभाविता तृतीया तु चतुर्थी पृथुला स्मृता॥"

इति। मतङ्गेन सप्त गीतय उक्ताः—

"प्रथमा शुद्धगीतिः स्याद्द्वितीया भिन्नका भवेत्।
तृतीया गौडिका चैव रागगीतिश्चतुर्थिका॥

साधारणी तु विज्ञेया गीतिज्ञैः पञ्चमी तथा ।
भाषागीतिस्तु षष्ठी स्याद्विभाषा चैव सप्तमी ॥
भाषा चैव विभाषा च तथा चान्तरभाषिका ।
तिस्रस्तु गीतयः प्रोक्ता याष्टिकेन महात्मना ॥
भाषाऽऽख्या गीतिरेकैव शार्दूलमतसंमता ।
गीतयः पञ्च विज्ञेयाः शुद्धा भिन्ना च वेसरा ।
गौडी साधारणी चैव, इति दुर्गामते मतम् ॥"

इति । तत्र दुर्गामतमाश्रित्य पञ्च गीतय इत्युक्तम् । शुद्धां गीतिं लक्षयति—**शुद्धा स्यादिति** । अवक्रैः सरलैर्ललितैः सुकुमारैः स्वरैर्युता गीतिः शुद्धा । भिन्नां लक्षयति—**भिन्नेति** । वक्रैः सूक्ष्मैरस्थूलैः स्वरैर्मधुरैश्च गमकैश्च युक्ता गीतिर्भिन्ना ; भेदो विकारः, अतस्तद्युक्ता गीतिर्भिन्ना यदुक्तं मतङ्गेन—'ननु भिन्नशब्देन किमभिधीयते ? भिन्नत्वं विदारणं व्यतिरिक्तत्वं वा । मैवम् ; भिन्नो ऽत्र विकृत उच्यते' इति । गौडीं लक्षयति—**गाढैरिति** । गाढैः प्रखरैः, त्रिस्थानव्यापका गमका येषु स्वरेषु तैः, ओहाटीललितैरोहाटया ललितै रमणीयैः स्वरैर्युक्ता स्थानत्रयव्यापिनी गीतिर्गौडी । ओहाट्या ललितैः स्वरैरित्युम् ; तत्र केयमोहाटीत्यपेक्षायामाह—**ओहाटीति** । कम्पितैर्मन्द्रैर्वेगवत्तरैः स्वरैर्हकारौकारयोगाद्धृदिस्थे चिबुके सत्योहाटी भवेत् । मतङ्गेनाप्युक्तम्—

"ओहाटीललिताश्चापि स्वरा गौड्याश्च शोभनाः ।
हकारौकारयोर्योगादोहाटी परिकीर्तिता ॥
चिबुकं हृदये न्यस्य त्वोहाटी मन्द्रजा भवेत् ।
द्रुतद्रुततरा कार्या स्वरकम्पेन पीडिता ॥
ओहाटी ललिता चापि दृढादृढेन कर्मणा ।
त्रिस्थानकरणैर्युक्ता त्रिस्थानचलनाकुला ॥
चतुर्विधा तदोहाटी कर्तव्या गेयवेदिभिः ।
समाक्षरा समा चैव कार्या ऽऽरोहावरोहिणी ॥
ओहाटी मन्द्रजोपात्ता प्रयोगे ध्वनिकम्पितैः ।
अविश्रामेण त्रिस्थाना गौडी गीतिरुदाहृता ॥" इति ॥ २–५ ॥

वेगवद्भिः स्वरैर्वर्णचतुष्के ऽप्यतिरक्तितः ।
वेगस्वरा रागगीतिर्वेसरा चोच्यते बुधैः ॥ ६ ॥
चतुर्गीतिगतं लक्ष्म श्रिता साधारणी मता ।
शुद्धाऽऽदिगीतियोगेन रागाः शुद्धादयो मताः ॥ ७ ॥

(क०) वर्णचतुष्के ऽपि स्थाय्यादिवर्णचतुष्टये ऽप्यतिरक्तितो रक्त्यतिशयवशाद्वेगवद्भिः शीघ्रप्रयोगवद्भिः स्वरैर्युता रागगीती रागाश्रयभूता गीतिर्वेगस्वरेत्यन्वर्थसंज्ञिका बुधैर्मतङ्गादिभिर्वेगस्वरा च वेसरसंज्ञिता चोच्यते । वेगस्वरेत्यत्र गवकारयोः परित्यागे स्वरसाम्याद्वेसरेति भवतीत्यर्थः । चतुर्गीतिगतं समनन्तरोक्तशुद्धाऽऽदिगीतिचतुष्टयगतं लक्ष्म लक्षणं श्रिता मिश्रणादाश्रिता, अतः साधरणीत्यन्वर्था मता । शुद्धाऽऽदिगीतियोगेन, शुद्धाऽऽदिगीतिभिर्योग आश्रयाश्रयिभावलक्षणः संबन्धस्तेन ; रागाः ; अत्र रागा इति ग्रामरागा एव विवक्षिताः ; शुद्धादयो मताः, आश्रयाश्रयिणोरभेदोपचाराच्छुद्धादिव्यपदेशेन वक्ष्यन्त इत्यर्थः । ननु पूर्वोक्ताभ्यो मागध्यादिगीतिभ्यो ऽधुनोक्तानां शुद्धाऽऽदिगीतीनां को भेद इति चेत् ; उच्यते । मागध्यादयः प्राधान्येन पदतालाश्रिताः ; शुद्धाऽऽदयस्तु प्राधान्येन स्वराश्रिता इतीह ग्रन्थकार एताः पञ्च गीतीर्दुर्गामतानुसारेणालक्षयत् । मतङ्गस्तु भाषाविभाषाभ्यां सहिताः सप्त गीतीराचष्ट । भरतः पुनर्मागध्यादीश्चतस्र एव गीतीरुक्तवान् । भाषाविभाषाऽन्तरभाषाऽऽख्यास्तिस्र एव गीतयो याष्टिकेनोक्ताः । एकैव भाषागीतिः शार्दूलमुनिना ऽभिहिता ॥ ६, ७ ॥

(सु०) वेसरां गीतिं लक्षयति—वेगवद्भिरिति । वेगवद्भिः स्वरैर्युक्ता गीतिर्वेगस्वरा वेसरेति चोच्यते । वर्णचतुष्के ऽप्यतिशयेन रञ्जकत्वाद्रागा इत्युच्यते । रागशब्दप्रवृत्तिनिमित्तमुक्तं काश्यपेन—

"चतुर्णामपि वर्णानां यो रागः शोभनो भवेत् ।

षड्जग्रामसमुत्पन्नः शुद्धकैशिकमध्यमः ।
शुद्धसाधारितः षड्जग्रामो ग्रामे तु मध्यमे ॥ ८ ॥
पञ्चमो मध्यमग्रामः षाडवः शुद्धकैशिकः ।
शुद्धा सप्तेति भिन्नाः स्युः पञ्च कैशिकमध्यमः ॥ ९ ॥
भिन्नषड्जश्च षड्जाख्ये मध्यमे तानकैशिकौ ।
भिन्नपञ्चम इत्येते गौडकैशिकमध्यमः ॥ १० ॥
गौडपञ्चमकः षड्जे मध्यमे गौडकैशिकः ।
इति गौडास्त्रयः षड्जे टक्कसौवीरषाडवौ ॥ ११ ॥
ससौवीरौ मध्यमे तु बोट्टमालवकैशिकौ ।
मालवः पञ्चमान्तो ऽथ द्विग्रामष्टक्ककैशिकः ॥ १२ ॥

स सर्वो दृश्यते येषु तेन रागा इति स्मृताः ।
स्वराः सरन्ति यद्वेगात्तस्माद्वेसरका स्मृता ॥"

इति । चतुर्गीतिगतमिति । शुद्धाऽऽदीनां चतसृणां गीतीनां किंचिल्लक्षणसमुच्चयेन साधारणी । लक्षणसमुच्चयश्चोक्तो मतङ्गेन—

"ऋजुभिर्ललितैः किंचित्सूक्ष्मात्सूक्ष्मैश्च सुश्रवैः ।
ईषद्द्रुतैश्च कर्तव्या मृदुभिर्ललितैस्तथा ॥
प्रयोगे मसृणैः सूक्ष्मैः काकुभिश्च सुयोजितैः ।
एवं साधारणी ज्ञेया सर्वगीतिसमाश्रया ॥"

इति । गीतिसंबन्धेन रागाणां शुद्धादिनामत्वमित्याह—**शुद्धाऽऽदीति** । शुद्धाऽऽदिकया गीत्या संयुक्ता रागाः शुद्धादय उदिताः ॥ ६, ७ ॥

(क०) एवमुक्तसमस्तमतानुसारेण तत्तद्गीताश्रितान्ग्रामरागादीन्विविच्योद्दिश्य परिगणयति—**षड्जग्रामसमुत्पन्नाः शुद्धकैशिकमध्यम** इत्यारभ्य **चतुःषष्ट्यधिकं ब्रूते शार्ङ्गी श्रीकरणाग्रणीरि**त्यन्तेन ग्रन्थसंदर्भेण ।

**हिन्दोलो ऽष्टौ वेसरास्ते सप्त साधारणास्ततः ।**
**षड्जे स्याद्रूपसाधारः शको भम्माणपञ्चमः ॥ १३ ॥**
**मध्यमे नर्तगांधारपञ्चमौ षड्जकैशिकः ।**
**द्विग्रामः ककुभस्त्रिंशद् ग्रामरागा अमी मताः ॥ १४ ॥**

षड्जग्रामे समुत्पन्नः षड्जग्रामसमुत्पन्न इति शुद्धकैशिकमध्यमादीनां त्रयाणां पृथग्विशेषणम् । तेषु षड्जग्रामसंज्ञकस्तृतीयो रागः । **ग्रामे तु मध्यम** इति । मध्यमग्राम इत्यर्थः । **मालवः पञ्चमान्त** इति । पञ्चमशब्दान्तो मालवो मालवपञ्चम इत्येको रागः । द्विग्राम इति टक्कैशिकस्य हिन्दोलस्य च विशेषणम् । तयोर्ग्रामद्वयसंबद्धजात्युत्पन्नत्वे सति साक्षाद्ग्रामद्वययुक्तत्वादिति भावः । पुनर्द्विग्राम इति ककुभविशेषणम् । **ग्रामराग** इति । ग्रामयोर्जातिव्यवधानेनोत्पन्नानामपि भाषारागाद्यपेक्षया व्यवधानाल्पत्वादेतेषां ग्रामरागत्वव्यपदेशः । यथा ऽऽह मतङ्गः—"नन्वेते रागा ग्रामविशेषसंबद्धा इति कुतो ऽयं विशेषलाभः ? उच्यते— भरतवचनादेवासौ विशेषो लभ्यते ; तथा चाह भरतमुनिः—'जातिसंभूतत्वाद्ग्रामरागाणाम्' इति, 'यत्किंचिद्गीयते लोके तत्सर्वं जातिषु स्थितम्' इति वचनाच्च" इति ॥ ८–१४ ॥

(सु०) ग्रामविभागेन शुद्धादिरागान्विभजते—षड्जग्रामेति । शुद्धकैशिकमध्यमः शुद्धसाधारितः षड्जग्राम इत्येते त्रयः शुद्धाः षड्जग्रामे समुत्पन्नाः । पञ्चमो मध्यग्रामः षाडवः शुद्धकैशिक इति चत्वारः शुद्धा मध्यमग्रामे समुत्पन्नाः ; एवं सप्त शुद्धाः । नन्वेते रागा ग्रामविशेषसंबद्धा इति कुतो ऽयं विशेषलाभः ? उच्यते—भरतवचनादेवासौ विशेषो लभ्यते ; यदाह भरतमुनिः—'जातिसंभूतत्वाद्रागाणाम्' इति, 'यत्किंचिद्गीयते लोके तत्सर्वं जातिषु स्थितम्' इति च । भिन्नान्विभजते—भिन्नाः स्युरिति । कैशिकमध्यमो

अष्टोपरागास्तिलकः शकादिष्टक्कसैन्धवः ।
कोकिलापञ्चमो रेवगुप्तः पञ्चमषाडवः ॥ १५ ॥
भावनापञ्चमो नागगांधारो नागपञ्चमः ।
श्रीरागनट्टौ बङ्गालौ भासमध्यमषाडवौ ॥ १६ ॥
रक्तहंसः कोल्हहासः प्रसवो भैरवो ध्वनिः ।
मेघरागः सोमरागः कामोदौ चाम्रपञ्चमः ॥ १७ ॥
स्यातां कंदर्पदेशाख्यौ ककुभान्तश्च कैशिकः ।
नट्टनारायणश्चेति रागा विंशतिरीरिताः ॥ १८ ॥

भिन्नषड्ज इत्येतौ द्वौ भिन्नौ षड्जग्रामे; तानः कैशिको भिन्नपञ्चम इति त्रयो भिन्ना मध्यमग्रामे; एवं पञ्च भिन्नाः । गौडकैशिकमध्यमो गौडपञ्चमक इत्येतौ षड्जग्रामे, गौडकैशिको मध्यमग्रामे; एवं त्रयो गौडाः । टक्को वेसरषाडवः सौवीर इत्येते त्रयः षड्जग्रामे; बोट्टो मालवकैशिको मालवपञ्चम इत्येते त्रयो मध्यमग्रामे; टक्ककैशिको हिन्दोल इत्येतौ ग्रामद्वयसंभूतौ; एवमष्टौ वेसराः । रूपसाधारः शको भम्माणपञ्चम इत्येते त्रयः षड्जग्रामोत्पन्नाः; नर्तो गांधारपञ्चमः षड्जकैशिक इत्येते त्रयो मध्यमग्रामोत्पन्नाः; द्विग्रामः ककुभः; एवं सप्त साधारणाः । मिलिता ग्रामरागास्त्रिंशत् ॥ ८–१४ ॥

(क०) **अष्टोपरागा** इति । जातिभ्यो जातानामपि ग्रामरागसमीपभावित्वादष्टानामुपरागत्वम् । **तिलकः शकादिरिति** । शकशब्दादिस्तिलकः शकतिलक इत्यर्थः । बङ्गालाविति द्वौ रागौ । **भासमध्यमषाडवाविति** । भासश्च मध्यमषाडवश्चेति द्वंद्वः । कामोदाविति द्वौ । **ककुभान्तश्च कैशिक** इति । ककुभशब्दान्तः कैशिकः कैशिकककुभ इत्येकः । **रागा** इति । उपरागेभ्यो ऽनन्तरं जातिभ्य एव जाताः श्रीरागादयो विंशतिः ॥ १५—१८ ॥

सौवीरः ककुभष्टक्कः पञ्चमो भिन्नपञ्चमः ।
टक्ककैशिकहिन्दोलबोट्टमालवकैशिकाः ॥ १९ ॥
गांधारपञ्चमो भिन्नषड्जो वेसरषाडवः ।
मालवः पञ्चमान्तश्च तानः पञ्चमषाडवः ॥ २० ॥
भाषाणां जनकाः पञ्चदशैते याष्टिकोदिताः ।
भाषाश्चतस्रः सौवीरे सौवीरी वेगमध्यमा ॥ २१ ॥
साधारिता च गांधारी ककुभे भिन्नपञ्चमी ।
काम्भोजी मध्यमग्रामा रगन्ती मधुरी तथा ॥ २२ ॥
शकमिश्रेति षट् तिस्रो विभाषा भोगवर्धनी ।
आभीरिका मधुकरी तथैका ऽन्तरभाषिका ॥ २३ ॥
शालवाहनिका टक्के त्रवणा त्रवणोद्भवा ।
वैरञ्जी मध्यमग्रामदेहा मालववेसरी ॥ २४ ॥
छेवाटी सैन्धवी कोलाहला पञ्चमलक्षिता ।
सौराष्ट्री पञ्चमी वेगरञ्जी गांधारपञ्चमी ॥ २५ ॥
मालवी तानवलिता ललिता रविचन्द्रिका ।
ताना ऽम्बाहेरिका दोह्या वेसरीत्येकविंशतिः ॥ २६ ॥

(सु०) उपरागान्विभजते—अष्टोपरागा इति । शकादिस्तिलकः शकतिलकः । रागान्विभजते—श्रीरागेति । वङ्गालद्वयम्, कामोदद्वयम् । एतावता विंशतिसंख्या पूर्यते ॥ १९-१८ ॥

(क०) निरुपपदरागव्यपदेशभाजस्त एते सौवीरादयः पञ्चदश ग्रामरागाः । भाषाणाम्; भाषा ग्रामरागालापप्रकारः; तथा चाह मतङ्गः—'ग्रामरागाणामेवालापप्रकारा भाषा वाच्याः । भाषाशब्दो ऽत्र प्रकारवाची'

भाषाः स्युरथ देवारवर्धन्यान्ध्री च गुर्जरी ।
भावनीति विभाषाः स्युश्चतस्रः पञ्चमे पुनः ॥ २७ ॥
कैशिकी त्रावणी तानोद्भवा ऽऽभीरी च गुर्जरी ।
सैन्धवी दाक्षिणात्या ऽऽन्ध्री माङ्गली भावनी दश ॥ २८ ॥
इति भाषा विभाषे द्वे भम्माण्यान्धालिके ततः ।
चतस्रः पञ्चमे भिन्ने भाषा धैवतभूषिता ॥ २९ ॥
शुद्धभिन्ना च वाराटी विशालेत्यथ कौशली ।
विभाषा मालवाभिन्नवलिते टक्ककैशिके ॥ ३० ॥
भाषे द्वे द्राविडीत्येका विभाषा प्रेङ्खके नव ।
भाषाः स्युर्वेसरी चूतमञ्जरी षड्जमध्यमा ॥ ३१ ॥
मधुरी भिन्नपौराली गौडी मालववेसरी ।
छेवाटी पिञ्जरीत्येका वोट्टे भाषा तु माङ्गली ॥ ३२ ॥
बाङ्गाली माङ्गली हर्षपुरी मालववेसरी ।
खञ्जनी गुर्जरी गौडी पौराली चार्धवेसरी ॥ ३३ ॥

इति । एवं विभाषाऽन्तरभाषाशब्दावपि तत्तदनन्तरोत्पन्नालापप्रकारवाचकावित्यवगन्तव्यम् । तासामपि रञ्जनाद्रागत्वं च बोद्धव्यम् । तथा च वक्ष्यति—'रञ्जनाद्रागता भाषारागाङ्गादेरपीष्यते' इति । तासां जनका याष्टिकोदिता भाषाजनकतया याष्टिकमुनिनोक्ताः । मतान्तराणामप्यत्रैवान्तर्भावाद्याष्टिकमतानुसारेणोद्दिश्यन्त इत्यर्थः । कथम्? मतङ्गः षडेव ग्रामरागान्भाषाजनकत्वेनाभाषत । काश्यपस्तु द्वादशैवावोचत् । शार्दूलः पुनश्चतुर एवाभ्यधादिति । ताना ऽम्बाहेरिकेति विभागः । **मालवाभिन्नवलिते** इति । मालवा च भिन्नवलिता चेति द्वंद्वः । प्रेङ्खक इति हिन्दोलपर्यायः ।

शुद्धा मालवरूपा च सैन्धव्याभीरिकेत्यमूः ।
भाषास्त्रयोदश ज्ञेया विज्ञैर्मालवकैशिके ॥ ३४ ॥
विभाषे द्वे तु काम्भोजी तद्वद्देवारवर्धनी ।
गांधारपञ्चमे भाषा गांधारी भिन्नषड्जके ॥ ३५ ॥
गांधारवल्ली कच्छेल्ली स्वरवल्ली निषादिनी ।
त्रवणा मध्यमा शुद्धा दाक्षिणात्या पुलिन्दका ॥ ३६ ॥
तुम्बुरा षड्जभाषा च कालिन्दी ललिता ततः ।
श्रीकण्ठिका च बाङ्गाली गांधारी सैन्धवीत्यमूः ॥ ३७ ॥
भाषाः सप्तदश ज्ञेयाश्चतस्रस्तु विभाषिकाः ।
पौराली मालवा कालिन्द्यपि देवारवर्धनी ॥ ३८ ॥
वेसरे षाडवे भाषे द्वे नाद्या बाह्यषाडवा ।
विभाषे पार्वती श्रीकण्ठचस्य मालवपञ्चमे ॥ ३९ ॥
भाषास्तिस्रो वेदवती भावनी च विभावनी ।
ताने तानोद्भवा भाषा भाषा पञ्चमषाडवे ॥ ४० ॥
पोता भाषां शकामेके रेवगुप्ते विदुर्विदः ।
विभाषा पल्लवी भासवलिता किरणावली ॥ ४१ ॥
शकाद्या वलितेत्येतास्तिस्रस्त्वन्तरभाषिकाः ।
चतस्रो ऽनुक्तजनका बृहद्देश्यामिमाः स्मृताः ॥ ४२ ॥

एके रेवगुप्ते विदुर्विद इति । उक्तमतानुसारेण रेवगुप्तस्य भाषाजनकेष्व-परिगणने ऽपि तस्यापि भाषाजनकत्वमङ्गीकृत्यान्य आचार्याः शकां तद्भाषा-मुक्तवन्त इत्यर्थः । चतस्रो ऽनुक्तजनका इति । पल्लवीप्रभृतयश्चतस्रः । अनन्योपजीवनी मुख्या । अन्योपजीवित्वं स्वरदेशापेक्षया प्रवर्तमानत्वम् ।

एवं षण्णवतिर्भाषा विभाषा विंशतिस्तथा ।
चतस्रो ऽन्तरभाषाः स्युः शार्ङ्गदेवस्य संमताः ॥ ४३ ॥
भाषा मुख्या स्वराख्या च देशाख्या चोपरागजा ।
चतुर्विधा मतङ्गोक्ता मुख्या ऽन्योपजीवनी ॥ ४४ ॥
स्वरदेशाख्यया ख्याता स्वराख्या देशजा क्रमात् ।
अन्योपरागजा ताभ्यो याष्टिकेनोदिताः पुनः ॥ ४५ ॥
संकीर्णा देशजा मूला च्छायामात्रेति नामभिः ।
शुद्धा ऽऽभीरी रगन्ती च त्रिधा मालववेसरी ॥ ४६ ॥
मुख्याः षडिति शेषाः स्युर्विज्ञेयाः स्फुटलक्षणाः ।
नामसाम्यं तु कासांचिद् भिन्नानामपि लक्ष्यतः ४७ ॥

तेन विना स्वातन्त्र्येण प्रवर्तमाना ऽत्र मुख्या । ताभ्यो मुख्यास्वराख्या-देशाख्याभ्यो ऽन्या विलक्षणोपरागजेति ज्ञेया । मुख्यादीनामेव मतङ्गोक्तानां याष्टिकोक्तानि संज्ञान्तराणि यथामूलेति मुख्या ; संकीर्णेति स्वराख्या ; देशजेति देशाख्या ; छायामात्रेत्युपरागजा ॥ १९—४७ ॥

(सु०) भाषाजनकान्पञ्चदश रागान्कथयति—सौवीर इति । टक्ककैशिक इत्येकं नाम । मालवः पञ्चमान्तो मालवपञ्चमः । भाषाणामिति । यथासंभवं भाषाविभाषाऽन्तरभाषाणां जनका इत्यर्थः । तत्र कः किं भाषादि जनयतीत्यत आह—भाषाश्चतस्र इति । सौवीरे सौवीर्यादयो गांधार्यन्ताश्चतस्रो भाषाः । ककुभे भिन्नपञ्चम्याद्याः शकमिश्रान्ताः षड् भाषाः ; भोगवर्धन्याभीरिकामधुकर्यस्तिस्रो विभाषाः ; शालवाहनिकैका ऽन्तरभाषा । टक्के त्रवण्यादयो वेसर्यन्ता एकविंशतिर्भाषाः ; देवारवर्धन्यादयो भावन्यन्ताश्चतस्रो विभाषाः । पञ्चमे कैशिक्यादयो भावन्यन्ता दश भाषाः ; भम्माण्यान्ध्रालिके द्वे विभाषे । भिन्नपञ्चमे धैवतभूषिताऽऽदयो विशालान्ताश्चतस्रो भाषाः ; कौशलीत्येका विभाषा । टक्ककैशिके मालवाभिन्नवलिते द्वे भाषे ; द्राविडयेका विभाषा ।

प्रेङ्खके हिन्दोले वेसर्यादयः पिञ्जर्यन्ता नव भाषाः । वोट्टे माङ्गल्येका भाषा । मालवकैशिके बाङ्गाल्यादय आभीरिकान्तास्त्रयोदश भाषाः; काम्भोजीदेवारवर्धन्यौ द्वे विभाषे । गांधारपञ्चमे गांधार्येकैव भाषा । भिन्नषड्जे गांधारवल्ल्यादयः सैन्धव्यन्ताः सप्तदश भाषाः; पौराल्यादयो देवारवर्धन्यन्ताश्चतस्रो विभाषाः । वेसरषाडवे नाद्या बाह्यषाडवेति द्वे भाषे; पार्वती श्रीकण्ठीति द्वे विभाषे । मालवपञ्चमे वेदवती भावनीविभावन्यस्तिस्रो भाषाः । ताने तानोद्भवैका भाषा । पञ्चमषाडवे पोतिका भाषा । रेवगुप्ते शकेत्येका भाषा; पल्लवीत्येका विभाषा; भासवलिता किरणावली शकवलितेत्येतास्तिस्रो ऽन्तरभाषाः । पल्लव्यादयश्चतस्रो बृहद्देश्यां जनकेन विनैव मतङ्गेनोक्ताः । एवं भाषाः षण्णवतिर्विभाषा विंशतिरन्तरभाषाश्चतस्रः । भाषायाश्चातुर्विध्यं कथयति—भाषेति । मुख्या स्वराख्या देशाख्योपरागजेति भाषाश्चतुर्विधाः । तत्र या ऽन्यं नोपजीवति सा मुख्या । या स्वरनाम्ना जायते सा स्वराख्या गांधार्यादिः । या देशनाम्ना जायते सा देशाख्या ऽऽन्ध्र्यादिः । या ताभ्यस्तिसृभ्यो जायते सा ऽन्योपरागजा । एता एव चतस्रः संकीर्णा देशजा मूला च्छायामात्रेति नामभिर्याष्टिकेनोक्ताः । एता एव विभजते—शुद्धेति । अन्यासां लक्षणं प्रकटम् । कासांचिद्भाषाणां लक्षणतो भिन्नानामपि नामसाम्यं विद्यत इति ॥ १९–४७ ॥

**इति द्वितीये रागविवेकाध्याये ग्रामरागोपरागरागभाषाविभाषाऽन्तरभाषाविवेकाख्यमादिमंप्रकरणम् ॥ १ ॥**

## अथ प्रसिद्धरागभाषाऽऽदिलक्षणाख्यं
## द्वितीयं प्रकरणम्

अथ रागाङ्गभाषाङ्गक्रियाऽङ्गोपाङ्गनिर्णयम् ।
केषांचिन्मतमाश्रित्य कुरुते सोढलात्मजः ॥ १ ॥
रञ्जनाद्रागता भाषारागाङ्गादेरपीष्यते ।
देशीरागतया प्रोक्तं रागाङ्गादिचतुष्टयम् ॥ २ ॥

(क०) रागाङ्गादिशब्दानां निरुक्तिर्मतङ्गोक्ता द्रष्टव्या । यथा—

'ग्रामोक्तानां तु रागाणां छायामात्रं भवेदिति ।
गीतज्ञैः कथिताः सर्वे रागाङ्गास्तेन हेतुना ॥
भाषाच्छायाऽऽश्रिता येन जायन्ते सदृशाः किल ।
भाषाऽङ्गास्तेन कथ्यन्ते गायकैस्तौतिकादिभिः ॥
करुणोत्साहशोकादिप्रबला या क्रिया ततः ।
जायन्ते च यतो नाम क्रियाऽङ्गाः कारणात्ततः ॥'

इति । मतङ्गेनोपाङ्गानि रागाङ्गादिष्वेवान्तर्भावितानि । ग्रन्थकारेण पुनस्तेषां पृथगुद्देशो मतान्तरानुसारेण कृत इति मन्तव्यम् । अङ्गच्छायानुकारित्वात्तेषामुपाङ्गत्वं च । रागाङ्गादिचतुष्टयं देशीरागतया प्रोक्तमिति । देशीत्वं नाम कामचारप्रवर्तितत्वम् ।

तदत्र मार्गरागेषु नियमो यः पुरोदितः ।
स देशीरागभाषादावन्यथाऽपि क्वचिद्भवेत् ॥ १, २ ॥

(सु०) रागाङ्गादीनि कथयितुं प्रतिजानीते—अथेति । केषांचिदिति । देशीरागत्वाद्भरतादिमुनिप्रणीतत्वं नास्तीत्यर्थः । रञ्जनादिति । रञ्जयन्तीति रागाः ।

प्रसिद्धा ग्रामरागाद्याः केचिद्देशीत्यपीरिताः ।
तत्र पूर्वप्रसिद्धानामुद्देशः क्रियतेऽधुना ॥ ३ ॥
शंकराभरणो घण्टारवो हंसकदीपकौ ।
रीतिः कर्णाटिका लाटी पाञ्चालीति[1] बभाषिरे ॥ ४ ॥
रागाङ्गाण्यष्ट गाम्भीरी वेहारी श्वसितोत्पली ।
गोली नादान्तरी नीलोत्पली च्छाया तरङ्गिणी ॥ ५ ॥
गांधारगतिका वेरञ्ज्याल्येकादश मेनिरे ।
भाषाङ्गाण्यथ भावक्रीस्वभावक्रीशिवक्रियः ॥ ६ ॥
मकरक्रीत्रिनेत्रक्रीकुमुदक्रीदनुक्रियः ।
ओजक्रीन्द्रक्रियौ नागकृतिर्धन्यकृतिस्तथा ॥ ७ ॥
विजयक्रीः क्रियाङ्गाणि द्वादशेति जगुर्बुधाः ।
त्रीण्युपाङ्गानि पूर्णाटी देवालश्च गुरुञ्जिका ॥ ८ ॥
चतुस्त्रिंशदिमे रागाः प्राक्प्रसिद्धाः प्रकीर्तिताः ।

अनया व्युत्पत्त्या भाषाविभाषाऽन्तरभाषाणां रागाङ्गभाषाङ्गक्रियाऽङ्गोपाङ्गानां च रागत्वमिष्यते। परं तु रागाङ्गादीनि देशीरागा इत्युच्यन्ते ॥ १, २ ॥

(क०) प्रसिद्धा ग्रामरागाद्याः । आद्यशब्देन भाषादयो गृह्यन्ते । **देशीत्यपीरिता** इति । तत्रापि किंचिन्नियमाभावो द्रष्टव्यः ॥ छाया तरङ्गिणीति रागद्वयम् ॥ ३—८ ॥

(सु०) प्रसिद्धा ग्रामरागाद्या अपि पञ्चमषाडवगुत्तनट्टनारायणादयः, तेऽपि देशीशब्देनोच्यन्ते । ते च रागाङ्गादयो द्विविधाः पूर्वप्रसिद्धा अधुनाप्रसिद्धाश्च ;

[1] पाञ्चीति.

अथाधुना प्रसिद्धानामुद्देशः प्रतिपाद्यते ॥ ९ ॥
मध्यमादिर्मालवश्रीस्तोडी बङ्गालभैरवौ ।
[1]वराटी गुर्जरी गौडकोलाहलवसन्तकाः ॥ १० ॥
धन्यासीदेशिदेशाख्या रागाङ्गाणि त्रयोदश ।
डोम्बक्री सावरी वेलावली प्रथममञ्जरी ॥ ११ ॥
आदिकामोदिका नागध्वनिः शुद्धवराटिका ।
नट्टा कर्णाटबङ्गालो भाषाङ्गाणि नवाब्रुवन् ॥ १२ ॥
क्रियाङ्गत्रितयं रामकृतिर्गौडकृतिस्तथा ।
देवक्रीरित्यथोपाङ्गसप्तविंशतिरुच्यते ॥ १३ ॥
कौन्तली द्राविडी सैन्धव्युपस्थानवराटिका ।
हस्तस्वरवराटी च स्यात्प्रतापवराटिका ॥ १४ ॥
वराट्यः षडिति च्छायातुरुष्काद्ये तु तोडिके ।
महाराष्ट्री च सौराष्ट्री दक्षिणा द्राविडीत्यमूः ॥ १५ ॥
उक्ताश्चतस्रो गुर्जर्यो भुञ्जिका स्तम्भतीर्थिका ।

तत्र पूर्वप्रसिद्धानामुद्देशं प्रतिज्ञाय कथयति—तत्रेति । शंकराभरणादयः पल्लव्यन्ता अष्टौ रागाङ्गाणीति, गाम्भीर्यादयो वेरञ्ज्यन्ता एकादश भाषाङ्गाणीति, भावक्रियाऽऽदयो विजयक्रयन्ता द्वादश क्रियाऽङ्गाणीति, पूर्णाटीदेवालगुरुञ्जिकास्त्रय उपाङ्गानीत्येवं चतुस्त्रिंशत्प्राक्प्रसिद्धाः ॥ ३—८ ॥

(क०) डोम्बकीति भूपालीपर्यायः । कामोदासिंहलीत्येको रागः, छायानट्टेति च । उपाङ्गेषु रामकृतिर्बौलिपर्यायः । देशवालः केदारगौलः । तौरुष्को मालवगौड एव । एते रागाङ्गादयः कतिचित्प्रसिद्धत्वेनोद्दि-

[1] वराली.

छायाप्रतापोपपदे वेलावल्यौ च भैरवी ॥ १६ ॥
कामोदासिंहली च्छायानट्टा रामकृतिस्तथा ।
भल्लातिका च मल्हारी मल्हारो गौडकास्ततः ॥ १७ ॥
कर्णाटो देशवालश्च तौरुष्कद्राविडाविति ।
एते ऽधुना प्रसिद्धाः स्युर्द्वापञ्चाशन्मनोरमाः ॥ १८ ॥
सर्वेषामपि रागाणां मिलितानां शतद्वयम् ।
चतुःषष्ट्यधिकं ब्रूते शार्ङ्गी श्रीकरणाग्रणीः ॥ १९ ॥

ष्टाः । अन्ये ऽप्यप्रसिद्धा बहवः संभवन्त्येव । तथा ऽऽह मतङ्गः— 'देशजानां रागाणामानन्त्यादनिबद्धत्वाच्च संख्या नास्तीति मन्तव्यम्' इति ॥ ९—१९ ॥

(सु०) अधुना प्रसिद्धानुद्दिशति—अथेति । मध्यमादादयो देशाख्याऽन्तास्त्रयोदश रागाङ्गाणि । डोम्बक्र्यादयः कर्णाटबङ्गालान्ता नव भाषाऽङ्गाणि । रामकृतिगौडकृतिदेवक्र्यस्त्रयः क्रियाऽङ्गाणि । कौन्तल्यादयो द्राविडगौडान्ताः सप्तविंशतिरुपाङ्गानि । एवं द्वापञ्चाशत् । अधुना प्रसिद्धानां रागाङ्गादीनां लक्षणमुक्तं मतङ्गेन—

'अतः परं प्रवक्ष्यामि देशीरागकदम्बकम् ।
लक्ष्यलक्षणसंयुक्तं त्रिविधं चापि संयुतम् ॥
रागाङ्गं चैव भाषाऽङ्गं क्रियाऽङ्गं च तृतीयकम् ।
प्रत्येकं लक्षणं चैषां प्रवक्ष्याम्यनुपूर्वशः ॥
उक्तानां ग्रामरागाणां छायामात्रं भजन्ति हि ।
गीतज्ञैः कथिताः सर्वे रागाङ्गास्तेन हेतुना ॥
भाषा च्छायाऽऽश्रिता येन जायन्ते सदृशाः किल ।
भाषाऽङ्गास्तेन कथ्यन्ते गायकैः स्तुतितत्परैः ॥

**तत्रादौ ग्रामरागाणां केषांचिल्लक्ष्म चक्ष्महे ।**
**देशीरागादिहेतूनां शेषाणां तत्र तत्र तु ॥ २० ॥**
**षड्जमध्यमया जातस्तारषड्जग्रहांशकः ।**
**निगाल्पो मध्यमन्यासः पूर्णः षड्जादिमूर्च्छनः ॥ २१ ॥**

शोकोत्साहकरुणादिदीपकात्मक्रियाऽऽदितः ।
जायन्ते च यतो नाम क्रियाऽङ्गास्तेन हेतुना ॥'

इति। अङ्गाश्रयेण समुत्पन्ना उपाङ्गानि। सर्वे मिलिता रागाश्चतुःषष्ट्यधिकं शतद्वयं भवन्ति ॥- ९—१९ ॥

(क०) उद्देशानुक्रमेण लक्षयितुमाह—**तत्रादाविति**। तत्र ग्रामरागादिषु मध्ये आदौ प्रथमं केषांचिद् ग्रामरागाणाम् ; ये तु देशीरागादिहेतवो न भवन्ति तेषामित्यर्थः। देशीरागादिहेतूनाम् ; देशीरागा रागाङ्गादयः ; अत्रादिशब्देन भाषा विभाषा अन्तरभाषाश्च गृह्यन्ते ; तेषां हेतवो जनकाः ; तादृशानां शेषाणां तत्र तत्र, जन्यतत्तद्देशीरागादिलक्षणावसरे, लक्ष्म चक्ष्महे इत्यावृत्तिः। अयमभिप्रायः—देशीरागादीनामेव केषांचिदधुना प्रसिद्धत्वात्तत्प्रसङ्गाल्लक्ष्यन्त इति ॥ २० ॥

(सु०) तत्रेति। केषांचिद् ग्रामरागाणां लक्षणं पूर्वं कथ्यते। देशीरागकारणभूतानां त्वन्येषां तत्र तत्र देशीरागप्रकरणे लक्षणं वक्ष्याम इति ॥ २० ॥

(क०) शुद्धसाधारितं लक्षयति—**षड्जमध्यमयेत्यादिना**। षड्जमध्यमया संसर्गजविकृतजात्या जनकभूतया जातो जनित इत्यर्थः। तारषड्जग्रहांशकः, तारषड्जको ग्रहो ऽंशश्च यस्येति बहुपदबहुव्रीहिः। अत्र रागेषु कचिद् ग्रहांशयोर्भिन्नत्वेन 'अन्यतरोक्तावुभयग्रहः' इति न्यायः सर्वत्र न प्रसरेदिति ग्रहांशयोरुभयोर्ग्रहणं कृतम्। अन्यतरोक्तावुभयग्रहन्या-

अवरोहिप्रसन्नान्तालंकृतो रविदैवतः ।
वीरे रौद्रे रसे गेयः प्रहरे वासरादिमे ॥ २२ ॥
विनियुक्तो गर्भसंधौ शुद्धसाधारितो बुधैः ।
ग्रहांशमन्द्रताराणां न्यासापन्यासयोस्तथा ॥ २३ ॥
अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ।

यस्तु जातिष्वेव नियतो द्रष्टव्यः ; रागलक्षणेष्वपि यत्रान्यतरस्यैवोक्तिस्तत्राप्यनुसंधेयः । निगाल्पो निगाभ्यामल्पः, अल्पनिषादगांधारवानित्यर्थः । षड्जादिमूर्च्छनः, षाड्जग्रामिकत्वादुत्तरमन्द्रायुत इति यावत् । अवरोहिप्रसन्नान्तालंकृतः, अवरोहिणि वर्णे प्रसन्नान्तालंकारेण भूषितः । गर्भसंधौ ; नाटकेषु मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिरिति पञ्च संधयः ; तेषु तृतीयो गर्भसंधिः ; तस्मिन्विनियुक्तः ॥ २१—२२- ॥

(सु०) शुद्धसाधारितं लक्षयति— षड्जमध्यमयेति । षड्जमध्यमाया जातेरुद्भूतः, तारस्थानस्थः षड्जो ग्रहो ऽंशश्च यस्मिन्, निषादगांधारावल्पौ यस्मिन्, षड्जादिर्मूर्च्छना यस्य, पूर्णः सप्तस्वरः, अवरोही यः प्रसन्नान्तो ऽलंकारस्तेनालंकृतः, रविः सूर्यो देवता ऽस्य, अतश्चैतस्य गाने सूर्यस्य प्रीतिः फलम् ; गर्भसंधौ विनियोगः । नन्वयं विनियोगविशेषः कस्माल्लभ्यते ? भरतवचनादेव ; यदाह भरतः—

'मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे तथा ।
गर्भे साधारितश्चैव ह्यवमर्शे तु पञ्चमः ।
संहारे कैशिकः प्रोक्तः पूर्वरङ्गे तु षाडवः ॥'

इति ॥ २१—२२- ॥

(क०) सकलरागसाधारणानालापादीँल्लक्षयति— ग्रहांशेत्यादिना । यत्र यस्मिन्स्वरसंनिवेशविशेषे, ग्रहांशादीनामुक्तलक्षणानां स्वराणामल्पत्वा-

**अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते ॥ २४ ॥**
**रूपकं तद्वदेव स्यात्पृथग्भूतविदारिकम् ।**[1]
**चच्चत्पुटादितालेन मार्गत्रयविभूषिता ॥ २५ ॥**
**आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः ।**

दीनां स्वरधर्माणां च ; अत्रैतेषामेवेत्यवधारणं कर्तव्यम् ; तेनास्य धात्वङ्गबद्धेभ्यः प्रबन्धेभ्यो वैलक्षण्यं विवक्षितं भवति ; तेषां ग्रहांशादीनामेवाभिव्यक्तिः स्वरूपप्रकाशनम् , आविर्भाव इत्यर्थः ; न तु स्वरूपप्रकटीकरणमात्रम् ; अनेन वक्ष्यमाणलक्षणाया आलप्तेरस्य भेदो दर्शितः ; सा ऽभिव्यक्तिर्दृष्टा ज्ञाता भवति ; तज्ज्ञैरिति शेषः ; स स्वरसंनिवेशविशेषो रागालाप इत्युच्यते । **रूपकं तद्वदिति** । रूपकमित्यालापभेदेन प्रबन्धपर्यायः । रूपकं तद्वदेवालापवदेव स्यात् । विशेषस्तु—**पृथग्भूतविदारिकमिति** । पृथग्भूता विच्छिद्य विच्छिद्य प्रयुक्ता विदार्यो गीतखण्डानि यस्मिन्निति तथोक्तम् । अयमर्थः—अपन्यासेष्वविरम्यैकाकारेण प्रवृत्त आलापः ; स एवापन्यासेषु विरम्य विरम्य प्रवृत्तं रूपकमिति । आक्षिप्तिकेति निबद्धगीतिभेदः । सा च चच्चत्पुटादि तालेन । आदिशब्देन चाचपुटादयो मार्गताला गृह्यन्ते । तेष्वन्यतमेन । मार्गत्रयविभूषिता ; मार्गत्रये पूर्वोक्ते चित्रादौ विभूषिता ऽलंकृता जात्युक्तनियमेनेति द्रष्टव्यम् । स्वरपदग्रथिता. षड्जादिस्वरोपेतैः पदैः पदार्थवाचकैः शब्दैर्ग्रथिता रचिता । पदतालाद्याक्षिप्तत्वादाक्षिप्तिकेत्यन्वर्था । बुधैर्मतङ्गादिभिः कथिता । अत्र रागप्रस्तारेषु कचिल्लिख्यमानयोः करणवर्तन्योर्निबद्धत्वेन प्रबन्धेषु परिगणितयोस्तत्रैव वक्ष्यमाणलक्षणत्वादिह ते न लक्षिते इत्याह—

[1] •विवादिकम्.

**नोक्ते करणवर्तन्यौ प्रबन्धान्तर्गतेरिह ॥ २६ ॥**
**मतङ्गादिमताद् ब्रूमो भाषाऽऽदिष्वेव रूपकम् ।**

१. शुद्धसाधारितः

सां पां धां रीपापाधारी पाधा सासा पाधानीधा पामांमां रींपा धारी पाधारी पाधापाधापापा सासा मा । सां गां रीं मां । मगरि सासा सरिग पाधारीपाधारीपाधापाधासासा सारीगामाधापानीधापानीधापा सां सां– इत्यालापः ।

**सस पप धध रिरि पप धस साम् २ रिरि पप धनि पप रिप धस सा सा२ धध मंमं गारी गंमं रिग मम मगरिग सासा२ सस धस रिंगं सासा पाधा निधप मंमं–इति करणम् ।**

**नोक्ते** इति । लक्षितस्य रूपकस्य प्रयोगस्थलमाह—**मतङ्गादीति** । भाषाऽऽदिष्वेवेत्यवधारणं ग्रामरागादित्रितयरागाङ्गादिचतुष्टयव्यवच्छेदार्थम् । आदिशब्देन विभाषाऽन्तरभाषे गृह्येते ॥ -२३—२६- ॥

(सु०) रागाभिव्यक्त्यर्थमालापरूपकाक्षिप्तिका दर्शयिष्यंस्तासां लक्षणं कथयति—ग्रहांशेति । ग्रहत्वादीनां लक्षणानां यत्राभिव्यक्तिर्दृश्यते स रागालापः । विवादिस्वरान्पृथक्कृत्य रागालापलक्षणयुक्तं रूपकम् । मार्गत्रययुक्तेन चच्चत्पुटादितालेन स्वरपदयुक्ता या गीयते सा ऽऽक्षिप्तिका । ननु करणवर्तन्यावपि रागाभिव्यक्त्यर्थं वक्ष्येते; तयोर्लक्षणं कथं नोक्तम्? अत आह—**नोक्ते** इति । तयोर्लक्षणं प्रबन्धाध्याये वक्ष्यत इत्यर्थः । मतङ्गादिमतेन भाषाविभाषाऽन्तरभाषास्वेवास्ति रूपकम्; तस्मात्तास्वेव रूपकं दर्शयिष्यामः ॥ -२३—२६- ॥

(क०) अस्य शुद्धसाधारितस्य प्रस्तारो यथा—षाड्जग्रामिकशुद्धस्वरमेलने तारे षड्जपञ्चमौ; मन्द्रे धैवतः; मध्ये रिपपधरिपधससपधनिधपाः; मन्द्रे मौ रिश्च; मध्ये पधौ; मन्द्रे रिः; मध्ये पधौ; मन्द्रे रिः;

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १. | सा | सा | धा | नी | पा | पा | पा | पा |
| | उ | द | य | गि | रि | शि | ख | र |
| २. | धा | धा | नी | नी | री | री | पा | पा |
| | शे | ख | | र | तु | र | ग | खु |
| ३. | री | पा | पा | पा | धा | नी | पा | मा |
| | र | | क्ष | त | वि | भि | | न्न |
| ४. | धा | मा | धा | सा | सा | सा | सा | सा |
| | घ | न | ति | मि | र: | | | |
| ५. | धा | धा | सा | धा | सा | री | गा | सा |
| | ग | ग | न | त | ल | स | क | ल |
| ६. | री | गा | पा | पा | पा | पा | पा | पा |
| | वि | लु | लि | त | स | ह | | ख |
| ७. | धा | मा | धा | मा | सा | सा | सा | सा |
| | कि | र | | णो | ज | य | | तु |
| ८. | पा | धा | निध | पा | मा | पा | मा | मा |
| | भा | | | | नुः | | | |

इत्याक्षिप्तिका । इति शुद्धसाधारित: ॥

मध्ये पध पध पपससमा: ; तारे सगरिमा: । एते प्रागुक्ता: स्वरा दीर्घा: प्रयोक्तव्या: । ततो मध्ये मगरीणां मेलनम् ; तत: सौ दीर्घौ ; तत: सरिगाणां मेलनम् ; पधरिपधरिपधपधसससरिगमधपनिधपनिधपा दीर्घा: ; मन्द्रे सौ दीर्घौ ; इत्यालाप: । मध्ये ह्रस्वयो: षड्जयो: पञ्चमयोर्धैवतयोर्ऋष-

भयोः पञ्चमयोर्धसयोश्च मेलनम्; ततो दीर्घः सः सानुस्वारश्च; एतेषां द्विरावृत्तिः। ततश्चर्षभयोः पञ्चमयोर्धन्योः पञ्चमयो रिपयोर्धसयोश्च ह्रस्वयोर्मेलनम्; ततः सौ दीर्घौ; एतेषामपि द्विरावृत्तिः। ततो धैवतयोर्मन्द्रमध्यमयोर्मेलनम्; ततो गरी दीर्घौ; ततो मन्द्रगमयो रिगयोर्मयोश्च मेलनम्; ततो मगरिगाणां मेलनम्; सौ दीर्घौ; एतेषामपि द्विरावृत्तिः। षड्जयोर्धसयोर्मन्द्ररिगयोर्दीर्घषड्जयोर्दीर्घपधयोर्निधपानां च मेलनम्। ततो मन्द्रमध्यमौ; इति **करणम्**। अथ जात्युक्तकलाप्रकारेण प्रथमकलायां मध्ये ससधनयश्चतुर्लघवः; चत्वारः पञ्चमाः; उदयगिरिशिखरेति प्रतिस्वरमक्षराणि (१)। द्वितीयस्यां मध्ये धधनिनयः; मन्द्र ऋषभौ; मध्ये च पञ्चमौ; शेखरतुरगखु, इत्यक्षराणि; तृतीयः स्वरः शेषः (२)। तृतीयस्यां मध्ये रिरिकः; पास्त्रयः; धनिपमाश्चत्वारः; रक्षत विभिन्नेत्यक्षराणि; द्वितीयोपान्त्यौ शेषौ (३)। चतुर्थ्यां मध्ये धमधास्त्रयः; षड्जाः पञ्च; घनतिमिर इत्यक्षराणि; षष्ठादयस्त्रयः शेषाः (४)। पञ्चम्यां मध्ये धधसधसरिगसा अष्टौ; गगनतलसकलेत्यक्षराणि (५)। षष्ठ्यां मध्ये रिगौ द्वौ; पाः षट्; विलुलितसहस्रेत्यक्षराणि; उपान्त्यः शेषः (६)। सप्तम्यां मध्ये धमधमाश्चत्वारः; साश्चत्वारः; किरणो जयतु, इत्यक्षराणि; तृतीयोपान्त्यौ शेषौ (७)। अष्टम्यां मध्ये पधौ द्वौ; निधाविकः; पमपास्त्रयः; मौ द्वौ; भानुरिति प्रथमपञ्चमयोरक्षरे; तच्छेषा इतरे (८)।

उदयगिरिशिखरशेखरतुरगखुरक्षतविभिन्नघनतिमिरः।
गगनतलसकलविलुलितसहस्रकिरणो जयतु भानुः॥

एवमेवोक्तरीत्या वक्ष्यमाणानां रागाणामपि प्रस्तारो मूलत एवावगन्तव्यः। ग्रन्थविस्तरभयादस्माभिः प्रस्तारा न प्रदर्श्यन्ते। एतेषां शुद्धादि-

रागभेदानां मतङ्गोक्तानि लक्षणानि संक्षिप्य प्रदर्श्यन्ते । तद्यथा, शुद्धानां तावत्—

'अनपेक्ष्यान्यजातीर्ये स्वजातिमनुवर्तकाः ।
स्वजात्युद्द्योतकाश्चैव ते शुद्धाः परिकीर्तिताः ॥'

अथ भिन्नानाम्—

'श्रुतिभिन्नो जातिभिन्नः शुद्धभिन्नः स्वरस्तथा ।
चतुर्भिर्भिद्यते यस्मात्तस्माद्भिन्नक उच्यते ॥'

ननु भिन्नशब्देन किमभिधीयते? किं विदारिक इत्यर्थः किमेतस्मादयं व्यतिरिक्त इत्यर्थो वा? एतन्न वाच्यं यतो ऽत्र विकृत उच्यते। विकृतत्वं च पूर्वोक्तश्रुतिभिन्न इत्यादिलक्षणात्। तत्रादौ स्वरभिन्नस्य लक्षणम्—

'यदा वादी गृहीतः स्यात्संवादी च विमोक्ष्यते ।
विवादी चानुवादी च स्वरभिन्नः स उच्यते ॥'

विवादी चानुवादी च गृहीतः स्यादित्यनुषङ्गः । शुद्धषाडवापेक्षया भिन्नषड्जभिन्नपञ्चमयोः स्वरप्रयोगभेदात्स्वरभिन्नत्वम् । अथ जातिभिन्नस्य लक्षणम्—

'जातीनामंशकः स्थाया अल्पकस्तु बहुस्तथा ।
अल्पत्वं च बहुत्वं च प्रयोगाल्पबहुत्वतः ।
सूक्ष्मातिसूक्ष्मैर्वर्णैश्च जातिभिन्नः स उच्यते ॥'

शुद्धकैशिकमध्यमापेक्षया भिन्नकैशिकमध्यमस्य ग्रहांशादिसाम्ये ऽपि स्वस्वजनकजातिगतवर्णभेदात्सूक्ष्मातिसूक्ष्मस्वरप्रयोगभेदाच्च भिन्नकैशिकमध्यमस्य जातिभिन्नत्वम् । अथ शुद्धभिन्नस्य लक्षणम्—

षड्जमध्यमया सृष्टस्तारषड्जग्रहांशकः ॥ २७ ॥
संपूर्णो मध्यमन्यासः षड्जापन्यासभूषितः ।

'परित्यजन्नन्यजातिं स्वजातिकुलभूषणः ।
स्वकं कुलं तु संगृह्णञ्शुद्धभिन्नः प्रकीर्तितः ॥'

शुद्धकैशिकभिन्नकैशिकयोः स्वरसंस्थानस्याविशेषे ऽपि तारस्वरव्याप्तिमतः शुद्धकैशिकान्मन्द्रस्वरव्याप्तिमतो भिन्नकैशिकस्य शुद्धभिन्नत्वम् । अथ श्रुतिभिन्नस्य लक्षणम्—

'चतुःश्रुतिः स्वरो यत्र भिन्नो द्विश्रुतिको भवेत् ।
गांधारो द्विश्रुतिश्चैव श्रुतिभिन्नः स उच्यते ॥'

भिन्नतानरागे हि षड्जस्य श्रुतिद्वयं गृह्णाति निषादः । भूतपूर्वन्यायेन षड्जो ऽपि चतुःश्रुतिरित्युच्यते । गांधारस्तु द्विश्रुतिरेव । अतो ऽस्य श्रुतिभिन्नत्वम् । अथ गौडानाम्—

'पूर्वोक्ताया गौडगीतेः संबन्धाद्गौडकाः स्मृताः ।'

अथ वेसराणाम्—

'स्वराः सरन्ति यद्वेगात्तस्माद्वेसरकाः स्मृताः ।'

अथ साधारणानाम्—

'शुद्धा भिन्नाश्च गौडाश्च तथा वेगस्वराः परे ।
कलिता यत्र तान्वक्ष्ये सप्त साधारणांस्ततः ॥'

इति ।

(क०) एवं रागभेदप्रतिपत्तिदार्ढ्याय विशेषप्रदर्शनाय च प्रासङ्गिक-

अवरोहिप्रसन्नान्तर्भूषः षड्जादिमूर्च्छनः ॥ २८ ॥
काकल्यन्तरसंयुक्तो वीरे रौद्रे ऽद्भुते रसे ।
विनियुक्तः मतिमुखे वर्षासु गुरुदैवतः ॥ २९ ॥
गेयो ऽह्नः प्रथमे यामे षड्जग्रामाभिधो बुधैः ।

२. षड्जग्रामः

संसंरी गधगरिस सनिधापाधाधारीगासां । री गा सा सग पनिधनिस सा सा । गसरिग पधनिप मामा—इत्यालापः ।

री रीं गाधा गरि सासा नींधपापा । री री गध परि सां सां सां सां । सां सां गानिधा रीरीगा । धा गारी सां सां निधपापा । री री पापा निधनि सां सां सां । सरि सरि पधनिध पमामामामा—इति करणम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १. | री | री | गा | सा | गा | री | गा | सा |
| | स | ज | य | तु | भू | | ता | |
| २. | नी | धा | पा | पा | री | री | गा | धा |
| | धि | प | तिः | | प | रि | क | र |
| ३. | गा | री | सा | सा | सा | सा | सा | सा |
| | भो | | गीं | द्र | | कुं | | ड |
| ४. | सा | सा | गा | धनि | नी | नी | नी | नी |
| | ला | | भ | र | णः | | | |

मुक्तम् ; इदानीं प्रकृतमनुसरामः । अत्र षड्जग्रामाभिधं रागं लक्षयति—षड्जमध्यमया सृष्ट इत्यादिना । स्पष्टो ऽर्थः ॥ -२७–२९- ॥

(सु०) षड्जग्रामरागं लक्षयति—षड्जमध्यमयेति । अत्र सुगमत्वान्न व्याख्येयं किंचित् ॥ -२७–२९- ॥

५. गा रिग धा धा गा गरि सा सा
ग ज च र्मे प ट नि

६. नी धा पा पा री री पा पा
व स नः श शां क

७. नी धा नी सा सा सा सा रिसरि
चू डा म णिः

८. पा धा निध पा मां मां मा मां
शं सुः

इत्याक्षिप्तिका । इति षड्जग्रामरागः ॥

**कार्माख्याश्च कैशिक्याः संजातः शुद्धकैशिकः ॥ ३० ॥**
**तारषड्जग्रहांशश्च पञ्चमान्तः सकाकली ।**
**सावरोहिप्रसन्नान्तः पूर्णः षड्जादिमूर्च्छनः ॥ ३१ ॥**
**वीररौद्राद्भुतरसः शिशिरे भौमवल्लभः ।**
**गेयो निर्वहणे यामे प्रथमे ऽह्नो मनीषिभिः ॥ ३२ ॥**

(क०) इतः प्रभृत्यशेषाणि रागलक्षणानि निगदेनैव व्याख्यातानि । किं तु केषांचिदुद्देशलक्षणयोः क्वचिल्लणेषु च विरोधः प्रतीयते । सो ऽपि मतङ्गादिमुनिमतानुसारेण परिहियते । यथा **शुद्धकैशिकमध्यमस्य—** 'षड्जमध्यमया सृष्टः कैशिक्या च रिपोज्झितः' इति लक्षणं श्रूयते । तत्र षड्जमध्यमा षड्जग्रामसंबद्धा जातिः ; कैशिकी तु मध्यमग्रामसंबद्धा ; ताभ्यां सृष्टस्य द्विग्रामत्वेनोद्देशे कर्तव्ये 'षड्जग्रामसमुत्पन्नः' इत्येकग्रामसमुत्पन्नत्वेनोद्देशः कृत इति विरोधः । परिहारस्तु—ऋषभपञ्चमहीन-

त्वात्षड्जग्रामसंबद्ध एवायम्, मध्यमग्राम ऋषभपञ्चमयोर्लोपो नास्तीति भाव इति मतङ्गोक्तः । अस्यायमर्थः—

'सपाभ्यां द्विश्रुतिभ्यां च रिपाभ्यां सप्त वर्जिताः ।
षड्जग्रामे पृथक्ताना एकविंशतिरौडुवाः ॥'

इत्यौडुवशुद्धतानलक्षणे षड्जग्राम एव रिलोपस्य दृष्टत्वादत्र ग्रामभेदकपञ्चमाभावे ऽप्यौडुवत्वं शुद्धतानविशेषस्यापि ग्रामभेदकत्वात्षड्जग्रामसंबद्ध एव तेनायमिति । तर्हि कैशिकजात्युत्पन्नत्वमस्य कुतो ऽवगतमिति चेत्क्रमो मध्यमाद्यमूर्च्छनया युत इत्युच्यते ; तत्र मध्यमाद्या मूर्च्छना सौवीरी ग्राह्या, न मत्सरीकृत ; अन्यथा तारषड्जग्रहांशत्वविधानमस्यानुपपन्नं स्यात् ; ग्रहांशभूतस्य स्वरस्य मूर्च्छनाऽन्तःपातित्वनियमात् । अतः पञ्चमलोपे ऽपि मध्यमग्रामधर्मेण तारव्यापकत्वेन मध्यमग्रामसंबन्धो ऽनुमीयत इति युक्त्या ऽनुगृहीताद्भरतादिवचनाच्च कैशिक्युत्पन्नत्वमवगम्यत इति । एवं च सत्यनुमानतः प्रत्यक्षस्य प्राबल्यादत्र प्रत्यक्षावगतग्रामसंबन्ध एव व्यपदिश्यत इत्याचार्याणामभिप्रायो ऽवगन्तव्यः । तथा **गौडकैशिकस्य** 'उद्भूतः कैशिकीषड्जमध्यमाभ्यां ग्रहांशकः' इति लक्षणं श्रूयते । तेनास्यापि द्विग्रामत्वे वक्तव्ये 'मध्यमे गौडकैशिकः' इति मध्यमग्रामसंबद्धत्वेनादेशो विरुद्धः । परिहारस्तु—तथा प्रयोगे त्रिश्रुतिकत्वात्पञ्चमस्य चतुःश्रुतिकत्वाद्धैवतस्य मध्यमग्रामसंबद्ध एवासौ रागस्तथा ऽपि षड्जो ऽस्य ग्रहो न मध्यमस्तथा दर्शनादिति मतङ्गोक्तः । अस्यार्थः— संपूर्णस्वरत्वादस्य क्रमात्त्रिचतुःश्रुतिकयोः पञ्चमधैवतयोरुपलम्भान्मध्यमग्रामसंबद्ध एवायम् । षड्जमध्यमोत्पन्नत्वं तु 'षड्जादिमूर्च्छनः' इत्यत्र 'मन्द्रो ऽस्य ग्रहो न मध्यमः' इति मतङ्गवचनेनोत्तरमन्द्राया एव विवक्षितत्वात्' तदायत्तमन्द्रव्याप्तिदर्शनेन षड्जग्रामसंबन्धानुमानादिति । तथा बोट्ट-

**रागस्य**—'बोट्टः स्यात्पञ्चमीषड्जमध्यमाभ्यां ग्रहांशकः' इति लक्षणं श्रूयते। अतो ऽस्यापि द्विग्रामत्वे 'मध्यमे तु बोट्टमालवकैशिकौ' इत्युद्देशो ऽत्र कृत इति विरोधः। परिहारस्तु—बोट्टरागो यद्यप्युभयग्रामसंबन्धिजातिद्वयसमुत्पन्नस्तथा ऽपि पञ्चमस्य त्रिश्रुतिकत्वान्मध्यमग्रामसंबद्ध इति मतङ्गोक्तः। अस्यार्थः—त्रिश्रुतिके पञ्चमे श्रवणादस्य मध्यमग्रामसंबन्धः साक्षादवगतः। पञ्चमादिकमूर्छन इत्यत्र पञ्चमादिकयोर्ग्रामद्वयमूर्च्छनयोः शुद्धषड्जाहृष्यकयोरेकस्थानत्वे ऽपि 'स्यात्षड्जमध्यमाजातेः पञ्चम्याश्च' इति मतङ्गवचनादत्र शुद्धषड्जाया एव विवक्षितत्वेन तत्प्रयुक्तमन्द्रव्याप्तषड्जग्रामसंबन्धो ऽनुमेय इति। अथ **टक्ककैशिकरागस्य**—'धैवत्या मध्यमायाश्च संभूतष्टक्ककैशिकः' इति लक्षणश्रवणाद्ग्रामद्वयजात्युत्पन्नत्वे ऽपि षड्जकैशिकमध्यमादिवदुक्तन्यायेन नैकग्रामव्यपदेशं हित्वा 'द्विग्रामष्टक्ककैशिकः' इत्युद्देशः कथमिति चेत्; सत्यम्। यद्यपि संपूर्णस्वरस्यास्य प्रयोगे च चतुःश्रुतिकस्य पञ्चमस्योपलम्भात्पूर्वोक्तन्यायेन षड्जग्रामसंबद्ध एवायमिति मतङ्गमतम्। तथा ऽपि काश्यपमतेन निषादगांधारयोर्लोपादयमौडुवित इति मतङ्गेनैवोक्तत्वात्तदा 'रिधाभ्यां द्विश्रुतिभ्यां च मध्यमग्रामगास्तु ते। हीनाश्चतुर्दशैव स्युः' इत्यौडुवशुद्धतानलक्षणमध्यमग्रामे ऽपि साक्षादवगम्यत इत्याचार्यद्वयमतानुसारिणा निःशङ्कसूरिणा 'द्विग्रामष्टक्ककैशिकः' इति सुष्ठूद्दिष्टम्। तथा **हिन्दोलस्यापि**—

'धैवत्यार्षभिकावर्ज्यस्वरनामकजातिजः।
हिन्दोलको रिधत्यक्तः षड्जन्यासग्रहांशकः'॥

इति लक्षणवशादत्र स्वरनामकजातीनां षाड्जीगांधारीमध्यमापञ्चमीनिषादीनां ग्रहणेन ग्रामद्वयजात्युत्पन्नत्वे सति रिधत्यक्ततानकत्वान्मध्यमग्रामसंबन्धे साक्षादवगते तथा च प्रयोगे चतुःश्रुतिकपञ्चमोपलम्भात्षड्जग्रामसंबन्धे च

साक्षादवगते द्विग्राम इति विशेषणमुपपन्नम्। येषां मते ऽस्य धैवतलोपो नेष्टः पञ्चमलोप इष्यते, तन्मते पूर्वोक्तन्यायेन षड्जग्रामाश्रित एवायम्। केवलर्षभलोपपक्षे ऽपि चतुःश्रुतिकपञ्चमोपलम्भात्षड्जग्रामसंबद्ध एव। यथा ऽऽह मतङ्गः—'भरतकोहलादिभिराचार्यैर्धैवतलोपस्यानिष्टत्वात्केचित्षड्जग्रामाश्रित एवायमिति मन्यन्ते; चतुःश्रुतिकस्य पञ्चमस्यात्रोपलम्भाद् धैवतस्यास्तित्वं वा नास्तित्वं वा न विशेषप्रदर्शकं सर्वत्र; एवं च सति ग्राममूर्च्छनाभेदो वा धैवतेन न स्यादिति भावः' इति। **नर्तरागस्य** तु—'मध्यमापञ्चमीजातो नर्तो ऽंशग्रहपञ्चमः' इति काश्यपाभिमताल्लक्षणान्मध्यमग्रामसंबन्ध एव; 'धैवतीमपि तद्धेतुं दुर्गाशक्तिरभाषत' इति लक्षणात्; तदा पञ्चमस्य चतुःश्रुतिकत्वात्षड्जग्रामसंबन्ध एव। तथा चोक्तं मतङ्गेन—'दुर्गाशक्तिमते ऽयमेव रागो यदा पञ्चमीमध्यमाधैवतीभ्यो जायते तदा षड्जग्रामसंबन्ध एव बोद्धव्यः; कुतः? पञ्चमस्य चतुःश्रुतिकत्वात्' इति। तदा मध्यमग्रामजात्युत्पन्नस्य तु पूर्वोक्त एव न्यायो द्रष्टव्यः। 'द्विग्रामः ककुभः' इत्युपदेशो ऽपि ककुभस्य 'मध्यमापञ्चमीधैवत्युद्भवः ककुभो भवेत्' इति लक्षणाद्ग्रामद्वयजात्युत्पन्नत्वे सति पञ्चमस्य चतुःश्रुतिकत्वात्षड्जग्रामसंबन्धे साक्षादवगते, लक्षणेषु निगलोपस्यानुक्तत्वे ऽपि मतङ्गेन प्रस्तारावसरे केषांचिन्मते च 'ककुभकैशिकस्य वर्तनिका' इत्युपक्रम्य निगौ परित्यज्यौडुवितत्वेनापि प्रस्तारे दर्शनात्। तत्र मध्यमग्रामसंबन्धश्च साक्षात्प्रतीयत इत्युपपन्न एव। उपरागेषु 'षड्जग्रामे रेवगुप्तो मध्यमाऽऽर्षभिकोद्भवः', इत्यत्रापि रेवगुप्तस्य चतुःश्रुतिकपञ्चमोपलम्भात्षड्जग्रामसंबन्ध एव साक्षादवगतः। मध्यमग्रामसंबन्धस्तु तारव्यापकत्वेनानुमेय इति।

'मध्यमग्रामसंबन्धो धैवत्यार्षभिकोद्भवः।
रिन्यासांशग्रहे क्वापि मान्तः पञ्चमषाडवः॥'

इत्यत्र पञ्चमषाडवस्य षड्जग्रामजात्युत्पन्नत्वे ऽपि 'कलोपनतया ऽन्वितः' इत्यनेन त्रिश्रुतिकस्य पञ्चमस्योपलम्भान्मध्यमग्रामसंबन्ध एव साक्षादवगतः; षड्जग्रामसंबन्धस्तु मन्द्रव्याप्त्या ऽनुमेय इति सर्वमवदातम्। ग्रामरागादीनां मूर्च्छनाविशेषपरिज्ञाने विनियोगविशेषपरिज्ञाने च मतङ्गोक्तमनुसंधेयम्। तद्यथा—ननु पूर्वोक्तानां रागाणां मूर्च्छनाविशेषनिर्देशः कस्माज्ज्ञायत इति चेदुच्यते। आप्तवचनान्मूर्च्छनाविशेषो ज्ञायते। तथा चाह कश्यपः—

'ज्ञात्वा जात्यंशबाहुल्यं निर्देश्या मूर्च्छना बुधैः'

इति। नन्वयं विनियोगविशेषः कस्माल्लभ्यते? भरतवचनादेव लभ्यते। तथा चाह भरतः—

'पूर्वरङ्गे तु शुद्धास्याद्भिन्ना प्रस्तावनाऽऽश्रया।
वेसरा मुखयोः कार्या गर्भे गौडी विधीयते॥
साधारिता ऽवमर्शे स्यात्संधौ निर्वहणे तथा।
मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे तथा॥
गर्भे साधारितश्चैव ह्यवमर्शे तु पञ्चमः।
संहारे कैशिकः प्रोक्तः पूर्वरङ्गे तु षाडवः॥
चित्रस्याष्टादशाङ्गस्य त्वन्ते कैशिकमध्यमः।
शुद्धानां विनियोगो ऽयं ब्रह्मणा समुदाहृतः॥'

इति। ननु गीतरागयोः को भेद इति चेत्; उच्यते—दशलक्षणलक्षितं गीतं रागशब्देनाभिधीयते। गीतं चतुरङ्गोपेतं ध्रुवायोगात्पञ्चविधम्। कुत एतद्विज्ञायते? आप्तवचनात्। तथा चाह कश्यपः—

कचिदंशः कचिन्न्यासः षाडवौडुविते कचित्।
अल्पत्वं च बहुत्वं च ग्रहापन्यासस‍ंयुतम्॥

३. शुद्धकैशिकः

सांसां गामा गारी गामां सांनी सांरी साधा माधा माधा नीधा पामा गामा पापा—इत्यालापः ।

सांसांसां रीरीसासारीरी गागा सांसांसां मामा गारी गारी सासारीरी पनि सांसांसां रीरी मामा पापाधामा मामाधानी सासासासा रीरीगामा सासापापा धामागामा पामा पापापापा—इति वर्तनी ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १. | सा | सा | सा | सा | सा | सा | नी | धा |
| | अ | | ग्नि | | ज्वा | | ला | शि |
| २. | सा | सा | री | मा | सा | री | गा | मा |
| | खा | | के | | शि | | | |
| ३. | सा | गा | री | सा | सा | सा | सा | सा |
| | मां | | | | स | शो | | णि |

मन्द्रतारौ तथा ज्ञात्वा योजनीया मनीषिभिः ।
ग्रामरागाः प्रयोक्तव्या विधिवद्ध्रुवरूपकाः ॥
प्रवेशाक्षेपनिष्कामप्रासादिकमथान्तरम् ।
गीतं पञ्चविधं यत्तद्रागैरेभिः प्रयोजयेत् ॥'

इति रागगीतयोर्भेदो मतङ्गोक्तः । अस्यायमर्थः—ग्रहांशादिदशलक्षणलक्षित-स्वरमात्रसंनिवेशविशेषो रागः ; तैः स्वरैः पदैस्तालैर्मार्गैरेवं चतुर्भिरङ्गैरुपेतं ध्रुवादिसंज्ञकं गीतमिति ॥ ३०–३२ ॥

(सु०) शुद्धकैशिकं लक्षयति—कार्मारव्या इति। पञ्चमान्तः पञ्चम-न्यासः । काकलिना सह वर्तमानः सकाकली । अवरोहिणा प्रसन्नान्तालंकारेण सह वर्तमानः । निर्वहणे संधौ गेयः ॥ ३०–३२ ॥

४. सा सा सा सा नी सा नी नी
त भो जि नि

५. मा मा गा री मा मा पा पा
स वां हा रि णि

६. धा नी पा मा धा मा धा सा
नि र्मो से

७. सा सा सा सा नी धा पा पा
च र्म मुं डे न

८. धा नी गा मा पा पा पा पा
मो स्तु ते

इत्याक्षिप्तिका । इति शुद्धकैशिकः ॥

षड्जमध्यमिकोत्पन्नो भिन्नकैशिकमध्यमः ।
षड्जग्रहांशो मन्यासो मन्द्रसान्तो ऽथ वा भवेत् ॥ ३३ ॥
षड्जादिमूर्च्छनः पूर्णः संचारिणि सकाकली ।
प्रसन्नादियुतो दानवीरे रौद्रे ऽद्भुते रसे ॥ ३४ ॥
दिनस्य प्रथमे यामे प्रयोज्यः सोमदैवतः ।

४. भिन्नकैशिकमध्यमः ॥

सां निधा सामां । मम धम मम धम गामाधाधा नीधा सस सां गां माधानीधा सां सां धमा मगा स गास साधा मामा । सां गां माधानीधा सांसां मधा पमाप मामा—इत्यालापः ।

(सु०) भिन्नकैशिकमध्यमं लक्षयति—षड्जमध्यमिकेति । मन्यासो मध्यमन्यासः ; अथ वा मन्द्रषड्जन्यासः । संचारिणि वर्णे प्रसन्नादिना ऽलंकारेण युक्तः ॥ ३३—३४ ॥

सस निध सस मम मध मग मध निमम। नीधांनीमधनिस। निधनि संसंसंसंसंसं धध। मम गसं सं गमा सांग गधांधांधधममधंमगममधसंसं। संसंधमधपमापा मामा—इति वर्तनिका।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १. | सा | सा | नी | धा | सा | सा | मा | मा |
| | त्रु | ह | दु | द | र | वि | क | ट |
| २. | मा | धा | मा | गा | मा | धा | नी | मा |
| | ग | | म | न | ज | र | ठ | वि |
| ३. | मा | नी | धा | नी | मा | धा | नी | नी |
| | भ | | कं | | सु | वि | पु | ल |
| ४. | नी | धा | नी | सा | सा | सा | सा | सा |
| | पी | | नां | | गं | | | |
| ५. | मा | मस | सा | सा | नी | धा | पा | पा |
| | अ | रि | द | म | न | वि | ष | म |
| ६. | धा | नी | मा | मा | गा | री | मा | मा |
| | लो | | च | नं | सु | र | न | मि |
| ७. | मा | मा | मा | मा | धा | नी | मा | मा |
| | तं | वि | ना | | य | कं | | |
| ८. | सा | सा | धा | नी | मा | मा | मा | मा |
| | वं | | | | दे | | | |

इत्याक्षिप्तिका। इति भिन्नकैशिकमध्यमः॥

मध्यमापञ्चमीजातः पञ्चमांशग्रहो ऽल्परिः ॥ ३५ ॥
रिहीनो वा मध्यमान्तो मध्यमाल्पः सकाकली ।
संचारिणि प्रसन्नादिमण्डितो ऽन्तिममूर्च्छनः ॥ ३६ ॥
ग्राम्यामे करुणे गेयो भिन्नतानः शिवप्रियः ।

५. भिन्नतानः

पां नीं सागा मापा धापामगामांमां । ममध ममग सां सां संसं सं मागम पापापानी सांगांमां धापाम गंमंमां । मम धप धध संसं पांपां संसंसं मागम पापा मंमं पप धध निनि पध मध मग गंसां सां गंसगससम पापापानी सांगांपापा धापामगमामा—इत्यालापः ।

पापा नीनी संसं गंगं पापानीपांनी सांगंगं सांगामा पाधा पाम गामापापा (पञ्चम) पापा सांसां धामापापापा (षड्ज) सस गम(पञ्चम) नी सांगां मापाधाम गां मामा—इति वर्तनी ।

१. पा पा नी नी सां सां गा गा
ह र व र मु कु ट ज

२. सा गां मप मग सां सां सां सां
टा लु लि तं

३. सा गा मा पा धा पा मप मग
अ म र व धू कु च

४. सा गा मा पा पा पा पा पा
प रि म लि तं

(सु०) भिन्नतानं लक्षयति—मध्यमेति । मध्यमायाश्च पञ्चम्याश्च जातेर्जातः । अल्पर्षभ ऋषभहीनो वा । मध्यमन्यासो ऽल्पमध्यमः । अन्तिममूर्च्छन ऋषभादिमूर्च्छनः ॥ -३५, ३६- ॥

ॐ

शिवाभ्यां नमः

श्री-निःशङ्कशार्ङ्गदेव-प्रणीतः

# संगीतरत्नाकरः

चतुरकल्लिनाथ-विरचितया कलानिध्याख्यटीकया सिंहभूपाल-
विरचितया संगीतसुधाकराख्यटीकया च समेतः

## तृतीयः प्रकीर्णकाध्यायः

अथ प्रकीर्णकं कर्णरसायनमनाकुलम् ।
देशीमार्गाश्रयं वक्ति शार्ङ्गदेवो विदांवरः ॥ १ ॥

(क०) द्वितीयेऽभिहितलक्षणानां ग्रामरागादीनां स्वरूपसाक्षात्कारस्य गातृनिर्मातृपरतन्त्रत्वेन तत्स्वरूपजिज्ञासायां तदादिलक्षणपरं प्रकीर्णकं वर्णयितुं प्रतिजानीते—**अथ प्रकीर्णक**मित्यादिना । कर्णरसायनत्वे ऽनाकुलत्वं हेतुः । अनाकुलत्वं चासंकीर्णतयार्थप्रतिपादनाद्भवति । तेन सुश्राव्यत्वं भवतीत्यर्थः । **देशीमार्गाश्रय**मिति विशेषणमत्र लिलक्षयिषितानां वाग्गेयकारादीनां देशीमार्गोभयसाधारणत्वात्तल्लक्षणपरस्य ग्रन्थस्यापि देशीमार्गोभया-

वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते ।
वाचं गेयं च कुरुते यः स वाग्गेयकारकः ॥ २ ॥
शब्दानुशासनज्ञानमभिधानप्रवीणता ।
च्छन्दः प्रभेदवेदित्वमलंकारेषु कौशलम् ॥ ३ ॥
रसभावपरिज्ञानं देशस्थितिषु चातुरी ।
अशेषभाषाविज्ञानं कलाशास्त्रेषु कौशलम् ॥ ४ ॥
तूर्यत्रितयचातुर्यं हृद्यशरीरशालिता ।
लयतालकलाज्ञानं विवेको ऽनेककाकुषु ॥ ५ ॥
प्रभूतप्रतिभोद्भेदभाक्त्वं सुभगगेयता ।
देशीरागेष्वभिज्ञानं वाक्पटुत्वं सभाजये ॥ ६ ॥

श्रयत्वेन प्रकीर्णकत्वद्योतनार्थम् । प्रकीर्णकत्वं च ग्रन्थस्य विषयविभागेन विना प्रवृत्तत्वमुच्यते । वक्तीति स्वस्मिन्नपि परत्वारोपेण प्रथमपुरुषनिर्देशः स्वस्य गर्वराहित्यद्योतनाय । यथा—'केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी' इत्यादि । शार्ङ्गदेवो ऽहं वच्मीत्यर्थः ॥ गातृव्यापारविषयनिर्मातृत्वेन प्राधान्यात्प्रथमोद्दिष्टस्य वाग्गेयकारस्य लक्षणं नामनिरुक्तिपूर्वकमाह—वाङ्मातुरित्यादिना । मातुधातुशब्दोद्देशावपि लोकप्रसिद्ध्यनुरोधेन वाग्गेयपर्याये प्रागुक्ताविति मन्तव्यौ ॥ **शब्दानुशासन**मिति । शब्दानुशासनं व्याकरणशास्त्रम् ; तस्य ज्ञानम् । एतेन प्रथमं तावत्सुशब्दापशब्दविवेचकेन भवितव्यमित्यर्थः । अभिधानममरकोशादि । च्छन्दः प्रभेदा अनुष्टुबादयः । अलंकारा उपमादयो ऽनुप्रासादयश्च । रसाः शृङ्गारादयः । भावा विभावादयः । देशस्थितिषु पाञ्चाल्यादिषु । कलाशास्त्रेषु संगीतशास्त्रेषु । तूर्यत्रितयं नृत्तगीतवाद्यम् । शारीरमत्रैव वक्ष्यमाणलक्षणम् ।

[1]रोषद्वेषपरित्यागः सार्द्रत्वमुचितज्ञता ।
अनुच्छिष्टोक्तिनिर्बन्धो नूत्नधातुविनिर्मितिः ॥ ७ ॥
परचित्तपरिज्ञानं प्रबन्धेषु प्रगल्भता ।
द्रुतगीतविनिर्माणं पदान्तरविदग्धता ॥ ८ ॥
त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम् ।
अवधानं गुणैरेभिर्वरो वाग्गेयकारकः ॥ ९ ॥
विदधानो ऽधिकं धातुं मातुमन्दस्तु मध्यमः ।
धातुमातुविदप्रौढः प्रबन्धेष्वपि मध्यमः ॥ १० ॥
रम्यमातुविनिर्माताप्यधमो मन्दधातुकृत् ।
वरो वस्तुकविर्वर्णकविर्मध्यम उच्यते ॥ ११ ॥
कुट्टिकारो ऽन्यधातौ तु मातुकारः प्रकीर्तितः ।

लया द्रुतादयः । तालाश्चच्चत्पुटादयः । कला आवापादयो निःशब्दा ध्रुवादयः सशब्दाश्च । काकवः स्वरकाकादयः षड्विधाः स्थायेषु वक्ष्यमाणलक्षणाः । प्रतिभा प्रज्ञाविशेषः ; यथाहुः—

"स्मृतिर्व्यतीतविषया मतिरागामिगोचरा ।
बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता ॥
प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ।" इति ॥

रोषो वाचिको ऽमर्षः । द्वेषो मानसिकः । सार्द्रत्वं सरसत्वम् । प्रबन्धेष्वेलाद्येषु । पदान्तरं नानागीतनिर्माणम् । गमकास्तिरिपादयो वक्ष्यमाणाः । विविधालप्तयो रागरूपकादिविशेषणयुक्ता वक्ष्यमाणाः । अवधानं चित्तैकाग्रता । एतानि शब्दानुशासनज्ञानादीनि समुदितानि वाग्गेयकारस्य लक्षणम् । न तु प्रत्येकं लक्षणानि ॥ वस्तुकविः कथाकविः ; वर्णकविर्वर्ण-

[1] राग इति सुधाकरः पाठः

नाकविः । 'अन्यथातौ मातुकारस्तु कुट्टिकारः प्रकीर्तितः' इत्यन्वयः । अत्र तुशब्देन कुट्टिकारस्याधमाधमत्वं द्योत्यते । तेन कुट्टिकारो ऽत्यन्ताधम इत्यवगन्तव्यः ॥ १—११- ॥ इति वाग्गेयकारलक्षणम् ॥

(सु०) तृतीयं प्रकीर्णकाध्यायं वक्तुं प्रतिजानीते—**अथेति** । प्रथमाध्याये स्वरान्निरूप्य स्वरेभ्यः साक्षात्समुत्पन्ना जातयो निरूपिताः । ततो रागास्तेषां जातिभ्यः समुत्पन्नत्वाद्रागाणां निरूपणं प्राप्तावसरमिति द्वितीयाध्याये रागा निरूपिताः । रागाभिव्यक्तिहेतुत्वादालप्तिलक्षणमपेक्षितम् । तत्र रागलक्षणेषु गमकानामुपयोग उक्तः । अतो गमकलक्षणमप्यपेक्षितम् । रागाणां च केवलं लक्षणतो दुर्ज्ञानत्वाद्वाग्गेयकारादिभिः प्रसिद्धिरपेक्षिता । अतो वाग्गेयकारादिलक्षणसमुच्चयस्य प्रकीर्णकाध्यायस्य रागाध्यायानन्तरं युक्त आरम्भः । **कर्णरसायनमिति** । सुकुमारशब्दोपनिबन्धत्वात् । अनाकुलं विशदम् । **देशीमार्गाश्रयमिति** । अत्र निरूपितानां गमकस्थायानां शारीरशब्दादीनामुभयत्रापि प्रयोगाद्वाग्गेयकारस्य निर्वचनं लक्षणं च कथयति—**वाङ्मातुरिति** । वाग्वाक्यम् ; गायकप्रसिद्धया मातुरित्युच्यते, गेयं गानयोग्यं धातुरित्युभयं यः कुरुते स वाग्गेयकारकः । उत्तमवाग्गेयकारकस्य गुणान्कथयति—**शब्दानुशासनमिति** । शब्दानुशासनं व्याकरणम् । अभिधानं नामलिङ्गानुशासनम् । छन्दः प्रभेदा समार्धसमविषमादयः । अलंकारेषु वामनभामहादिप्रोक्तेषु ग्रन्थेषूपमादिषु वा कौशलं प्रावीण्यम् । रसा शृङ्गारादयः । भावा निर्वेदादयः । देशस्थितिषु चातुरी देशकालपरिज्ञानार्थम् । अशेषभाषाविज्ञानं देशैलादिनिर्माणाय । कलाशास्त्राणि चतुःषष्टिः ; संगीतशास्त्रादीनि । तूर्यत्रितयं नृत्तगीतवाद्यादि । शारीरं वक्ष्यमाणलक्षणम् । लयतालकला अपि तालाध्याये वक्ष्यमाणलक्षणाः । काकवः देशकाक्वादयो वक्ष्यमाणलक्षणाः । प्रभूतप्रतिभोद्भेदः बहुप्रतिभोदयवक्ता ; प्रतिभा प्रमेयस्फूर्तिः शक्तिशब्देनोच्यते कविभिः । तदुक्तं **काव्यप्रकाशे**—

"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥" इति ॥

सुभगगेयता श्रव्यगानत्वम् । देशीरागाः श्रीरागादयः । रागद्वेषपरित्यागः वादेषु प्राश्निकत्वाय । सार्द्रत्वं सरसचित्तत्वम् । उचितज्ञता रसनिर्वाहार्थम् । **तदुक्तम्**—

**मार्गं देशीं च यो वेत्ति स गान्धर्वो ऽभिधीयते ॥ १२ ॥**
**यो वेत्ति केवलं मार्गं स्वरादिः स निगद्यते ।**
**हृद्यशब्दः सुशारीरो ग्रहमोक्षविचक्षणः ॥ १३ ॥**

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥" इति ॥

अनुच्छिष्टा उक्तिरन्येन कविना रचितशब्दपरंपरापरित्यागेन माधुर्यैकविनिबद्धता । प्रबन्धेष्वेलादिषु लक्षणपरिज्ञानमुपनिबन्धनशक्तिश्च प्रगल्भता । द्रुतगीतविनिर्माणं शीघ्रगीतनिर्माणम् । पदान्तरलक्षणं वक्ष्यति प्रबन्धाध्याये । तत्र वैदग्ध्यमवधानं पूर्वापरविनिश्चितिरेभिर्गुणैरुत्तमो वाग्गेयकारकः । यस्तु धातुं गेयं सम्यग्रचयति, मातौ वाग्गुम्फे च मन्दः स मध्यमः । यस्तु धातुमातुद्वयमपि जानाति प्रबन्धेषु प्रौढिश्च नास्ति सो ऽपि मध्यमः । यस्तु मातुं सम्यग्रचयति धातौ च मन्दः सो ऽधमः । यस्तु वस्त्वभिधेयं सम्यग्रचयति स वर उत्तमः । यस्त्वभिधेये रामणीयता नास्ति, वर्णानेव सम्यग्रचयति स मध्यमः । यस्त्वन्यधातौ मातुं रचयति स कुट्टिकार इत्युच्यते । वाग्गेयकारदोषा उक्ताः **संगीतसमयसारकारेण**—

"ग्राम्योक्तिरपशब्दश्च तद्वदप्रस्तुतस्तुतिः ।
गमके च पदे जाड्यं प्रबन्धज्ञानहीनता ॥
रसानुरूपरागाणामज्ञत्वमविदग्धता ।
क्रियानिर्वहणाज्ञत्वं मन्दशारीरता तथा ॥
माने न्यूनाधिकाज्ञत्वं रीतिभङ्गस्तथा पुनः ।
च्छायापरिच्युतिस्तद्वद्गानं चासमये तथा ॥
अश्राव्यं लक्षणं त्यक्त्वा धातुमातू करोति यः ।
दोषैरेतैरुपेतो यो निन्द्यो वाग्गेयकारकः ॥" इति ॥

१—११- ॥ इति वाग्गेयकारलक्षणम् ॥

(क०) गीतगुणदोषपरिज्ञातृतया सहृदयत्वेनोद्दिष्टौ गान्धर्वस्वरादी लक्षयति—**मार्गं देशीं** चेति । अथ गायनं लक्षयति—**हृद्यशब्द** इत्या-

रागरागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गकोविदः ।
प्रबन्धगाननिष्णातो विविधालप्तितत्त्ववित् ॥ १४ ॥
सर्वस्थानोत्थगमकेष्वनायासलसद्गतिः ।
आयत्तकण्ठस्तालज्ञः सावधानो जितश्रमः ॥ १५ ॥
शुद्धच्छायालगाभिज्ञः सर्वकाकुविशेषवित् ।
अनेकस्थायसंचारः सर्वदोषविवर्जितः ॥ १६ ॥
क्रियापरो युक्तलयः सुघटो धारणान्वितः ।
स्फूर्जन्निर्जवनो हारिरहःकृद्भजनोद्धुरः ॥ १७ ॥
सुसंप्रदायो गीतज्ञैर्गीयते गायनाग्रणीः ।
गुणैः कतिपयैर्हीनो निर्दोषो मध्यमो मतः ॥ १८ ॥
महामाहेश्वरेणोक्तः स दोषो गायनो ऽधमः ।
शिक्षाकारो ऽनुकारश्च रसिको रञ्जकस्तथा ॥ १९ ॥
भावुकश्चेति गीतज्ञः पञ्चधा गायनं जगुः ।
अन्यूनशिक्षणे दक्षः शिक्षाकारो मतः सताम् ॥ २० ॥
अनुकार इति प्रोक्तः परभङ्ग्यनुकारकः ।
रसाविष्टस्तु रसिको रञ्जकः श्रोतृरञ्जकः ॥ २१ ॥
गीतस्यातिशयाधानाद्भावुकः परिकीर्तितः ।
एकलो यमलो वृन्दगायनश्चेति ते त्रिधा ॥ २२ ॥

दिना । शब्दशारीरयोर्लक्षणमनन्तरं वक्ष्यते । ग्रहमोक्षावत्र गीतस्यारम्भपरिसमाप्ती ; तयोर्विचक्षणः । तत्र विचक्षणत्वं नाम ग्रहताललयानुरोधेन गीतनिर्वाहकत्वम् । आयत्तकण्ठः स्वाधीनध्वनिः । क्रियापरो ऽभ्यासतत्परः । सुघटः शोभनं यथाभवति तथा घटयतीति सुघटः । लौकिक-

एक एव तु यो गायेदसावेकलगायनः।
सद्वितीयो यमलकः सवृन्दो वृन्दगायनः ॥ २३ ॥
रूपयौवनशालिन्यो गायन्यो गातृवन्मताः।
माधुर्यधुर्यध्वनयश्चतुराश्चतुरप्रियाः ॥ २४ ॥

देशभाषया 'सुघड' इति वदन्ति। स्फूर्जन्निर्जवनः; निर्जवनस्य लक्षणं स्थायेषु वक्ष्यते। अप्रतिहतवेगवानित्यर्थः। रहःकृतगीतस्य श्रोतृजनमोहनत्वं रह इत्युच्यते। तत्करोतीति तथोक्तः। सुगममन्यत् ॥ १२—२४ ॥

(सु०) गान्धर्वं लक्षयति—मार्गमिति। देशीमार्गावुक्तलक्षणौ; तौ यो जनाति स गान्धर्वः। यः केवलं मार्गं जानाति स स्वरादिः। गायनं लक्षयति—हृद्यशब्द इति। हृद्यो रमणीयःशब्दो यस्य गुणयुक्तः शारीरः; गीतस्योद्गृहणस्थानविमुक्तिनिचयः सम्यग्जानाति। रागा मार्गरागादयः; रागाङ्गादीनि देशीरागादयः; तेषु कोविदः। प्रबन्धेष्वेलादिषु तालेषु च निष्णातः सुज्ञः; विविधानां वक्ष्यमाणानामालप्तीनां तत्त्वज्ञः। मन्द्रमध्यतारस्थानोत्थगमकेषु निरायासशारीरगतिमान्; आयत्तकण्ठः स्वाधीनकण्ठः; सावधानः श्रुतिनिश्चयज्ञः; जितश्रमो बहुप्रबन्धगाने ऽप्यश्रान्तः। शुद्धच्छायालगाभिज्ञः मार्गसूडसालगसूडाभिज्ञः; काकुविशेषा वक्ष्यन्ते; तदभिज्ञः। अनेकस्थायसंचारे प्रवीणः; स्थाया वक्ष्यन्ते। क्रियापरः गानक्रियाभ्यासतत्परः। **संगीतसमयसारकारेण** क्रियापरस्य लक्षणमुक्तम्—

"यथाशास्त्रप्रयोगेण मार्गं देशीयमेव च।
यो गायति विना दोषान्कथ्यते ऽसौ क्रियापरः ॥" इति ॥

युक्तलयः; गायकप्रसिद्धया रञ्जकः। सुघटस्य लक्षणमुक्तं **संगीतसमयसारकारेण**—

"स्वरो वर्णश्च तालश्च व्यक्तं घटयति त्रयम्।
शोभनध्वनिसंयुक्तः सुघटं तं प्रचक्षते ॥" इति ॥

**संदष्टोद्घुष्टसूत्कारिभीतशङ्कितकम्पिताः ।**
**कराली विकलः काकी वितालकरभोद्भटाः ॥ २५ ॥**
**झोम्बकस्तुम्बकी वक्री प्रसारी विनिमीलकः ।**

धारणान्वित इति । धरणेर्लक्षणमुक्तं तत्रैव—

"अनुतारात्परं श्रुत्या हीनेनापसरन्स्वरात् ।
ध्वनेः सुगाढता तज्ज्ञैर्धरणिः समुदाहृता ॥
जितश्वासतया गानं नाम्ना निर्जवनं विदुः ।" इति ॥

रहःकृत् वेगगायी । भजनं रागसुव्यक्तिः सुशारीरसमुद्भवा । भजनेनोद्धुर उत्कटः । एवंविधैर्गुणैरुत्तमो गायकः । कतिपयैर्गुणैर्हीनः । निर्दोषश्च मध्यमः । दोषयुक्तस्त्वधमः । पञ्चप्रकारं गायनं कथयति—शिक्षाकार इति । एतेषां लक्षणं कथयति—अन्यून शिक्षण इति । एतेषां लक्षणमुक्तं संगीतसमयसारकारेण—

"द्रुतं यः शिक्षते गीतं विषमं प्राञ्जलं तथा ।
शुद्धे च्छायालगे सम्यक्शिक्षाकारः स कथ्यते ॥
सुश्रवं गीतमाकर्ण्य भवेद्यः पुलकान्वितः ।
आनन्दाश्रुकणाकीर्णः सो ऽयं रसिकगायकः ॥
नीरसं सरसं कुर्वन्निर्भावं भावसंयुतम् ।
श्रोतुश्चित्तं परिज्ञाय यो गायेत्स तु भावुकः ॥
चेतोहरेण गीतेन विदित्वा श्रोतुराशयम् ।
रङ्गं गीते विधत्ते यो रञ्जकः सो ऽभिधीयते ॥" इति ॥

पुनरपि त्रैविध्यं कथयति—युक्तलय इति । एतेषां लक्षणं कथयति—एक एवेति । गायनलक्षणं गायन्यामप्यतिदिशति—रूपयौवनेति । चतुरा विदग्धा ॥ -१२—२४ ॥

(क०) एवं सभेदं गायनं गायनीं च लक्षयित्वा तद्दोषान्धर्मिपरत्वेनोद्दिश्य लक्षयति—संदष्टोद्घुष्टेत्यादिना । स्पष्टो ऽर्थः । एते दोषा गायनीगतत्वेनाप्यूह्याः । हृद्यशब्द इति गायनविशेषणत्वेन प्रसक्तं शब्दं सप्रभेदं

विरसापस्वराव्यक्तस्थानभ्रष्टाव्यवस्थिताः ॥ २६ ॥
मिश्रको ऽनवधानश्च तथान्यः सानुनासिकः ।
पञ्चविंशतिरित्येते गायना निन्दिता मताः ॥ २७ ॥
संदश्य दशनान्गायन्संदष्टः परिकीर्तितः ।
उद्घुष्टो विसरोद्घोषः सूत्कारी सूत्कृतैर्मुहुः ॥ २८ ॥
भीतो भयान्वितो गाता त्वरया शङ्कितो मतः ।
कम्पितः कम्पनाज्ज्ञेयः स्वभावाद्गात्रशब्दयोः ॥ २९ ॥
कराली गदितः सद्भिः करालोद्घाटिताननः ।
विकलः स तु यो गायेत्स्वरान्न्यूनाधिकश्रुतीन् ॥ ३० ॥
काकक्रूररवः काकी वितालस्तालविच्युतः ।
दधानः कंधरामूर्ध्वां करभो ऽभिहितो बुधैः ॥ ३१ ॥
च्छागवद्वहनीं कुर्वन्नुद्भटो ऽधमगायनः ।
शिरालभालवदनग्रीवो गाता तु झोम्बकः ॥ ३२ ॥
तुम्बकी तुम्बकाकारोत्फुल्लगल्लस्तु गायनः ।
वक्री वक्रीकृतगलो गायन्धीरैरुदीरितः ॥ ३३ ॥

लक्षयति—चतुर्भेद इत्यादिना ते ग्रन्थविस्तरत्रासादस्माभिर्न समीरिता इत्यन्तेन । तत्र खाहुलादयः शब्दा रूढाः । मिश्रकशब्दोऽन्वर्थः । निगदव्याख्यातमन्यत् ॥ २५—६७ ॥ इति शब्दभेदलक्षणम् ॥

(सु०) निन्दितान्गायकान्कथयति—संदष्टेति । एतेषां लक्षणं कथयति—संदश्येति । सूघुतैरुपलक्षितं यो गायति सः सूत्कारी । करालं भयानकमुद्घाटितं विवृतमाननम् । काकवत्क्रूरो रवो यस्य सः काकक्रूररवः । च्छागो मेषस्तद्वद्वक्ष्यमाणलक्षणां वहनीं कुर्वन्नुद्भटं शिरालं भालं वदनं ग्रीवा च यस्मिन्निति क्रियाविशेषणम् । तुम्बो ऽलाबुस्तद्वत्फुल्लगल्लस्तुम्बकी । निषिद्धस्वरगाता

प्रसारी गीयते तज्ज्ञैर्गात्रगीतप्रसारणात् ।
निमीलको मतो गायन्निमीलितविलोचनः ॥ ३४ ॥
विरसो नीरसो वर्ज्यस्वरगानादपस्वरः ।
गद्गद्ध्वनिरव्यक्तवर्णस्त्वव्यक्त उच्यते ॥ ३५ ॥
स्थानभ्रष्टः स यः प्राप्तुमशक्तः स्थानकत्रयम् ।
अव्यवस्थित इत्युक्तः स्थानकैरव्यवस्थितैः ॥ ३६ ॥
शुद्धच्छायालगौ रागौ मिश्रयन्मिश्रकः स्मृतः ।
इतरेषां च रागाणां मिश्रको भूरिमिश्रणात् ॥ ३७ ॥

अपस्वरः । स्थानकत्रयं मन्द्रमध्यताराख्यम् । अव्यवस्थितैः व्यस्तैः स्थानैरुपलक्षितम् । गायकव्यवस्थित्या वक्ष्यमाणलक्षणेषु स्थायेषु, आदिशब्देन गमकेषु चावधानम् ; तेन निर्मुक्तः स्थानविपर्यासकृदनवधानः । अन्ये ऽपि गायकविशेषाः संगीतसमयसारकारेणोक्ताः—

"गीतादपि यदालप्तिं कुर्यात्सौख्यविधायिनीम् ।
आलप्तिगायनः सो ऽयं निर्दिष्टो गीतवेदिभिः ॥
आलप्तेरपि यद्गीतं भवेदतिमनोहरम् ।
उक्तो गायकभेदज्ञैः सो ऽयं रूपकगायनः ॥
शुद्धे च्छायालगे चैव गीतमालप्तिसंयुतम् ।
यो गायति स विज्ञेयश्चोपटो गीतवेदिभिः ॥
ध्वनिशारीरयोर्यत्र नानादेशेषु रीतयः ।
विलगन्ति स विज्ञेयो वितालो गीतवेदिभिः ॥
नानाविधं विभक्तं च ध्वनौ यश्चिन्तयेद्द्रुतिम् ।
विबन्धः स तु विज्ञेयो गीततत्त्वविचक्षणैः ॥
रागे रागान्तरच्छायां मिश्रयन्दोषवर्जितः ।
प्रवीणत्वेन यो गायेत्सो ऽयं मिश्र उदाहृतः ॥" इति ।

इति गायनलक्षणम् ॥

स्थायादिष्ववधानेन निर्मुक्तो ऽनवधानकः ।
गेयं नासिकया गायन्नीयते सानुनासिकः ॥ ३८ ॥
चतुर्भेदो भवेच्छब्दः खाहुलो नारटाभिधः ।
बोम्बको मिश्रकश्चेति तल्लक्षणमथोच्यते ॥ ३९ ॥
कफजः खाहुलः स्निग्धमधुरः सौकुमार्ययुक् ।
आडिल्ल एष एव स्यात्प्रौढश्चेन्मन्द्रमध्ययोः ॥ ४० ॥
त्रिस्थानघनगम्भीरलीनः पित्तोद्भवो ध्वनिः ।
नाराटो बोम्बकस्तु स्यादन्तर्निःसारतायुतः ॥ ४१ ॥
परुषोच्चैस्तरः स्थूलो वातजः शार्ङ्गिणोदितः ।

अथ शब्दभेदान्कथयति—चतुर्भेद इति । खाहुलं लक्षयति—कफज इति । श्लेष्मणो जातः स्नेहमाधुर्यसौकुमार्याणि शब्द औपचारिकाणि ज्ञातव्यानि । एष एव खाहुलः शब्दः; मन्द्रमध्यस्थानयोः प्रौढिं व्याप्तिं प्राप्नोति चेत्तदा आडिल्ल इत्युच्यते । नाराटं लक्षयति—त्रिस्थानेति ॥ मन्द्रमध्यतारस्थानत्रये ऽपि घनो ऽन्तःसारः, गम्भीरो निर्ह्लादी, लीनो ऽस्फुटितः, पित्तोत्पन्नध्वनिर्नाराटः । बोम्बकं लक्षयति—बोम्बकस्त्विति । एरण्डकाण्डवदन्तर्निःसारः, परुषः स्निग्धताहीनः, उच्चैस्तरस्तारो गर्दभध्वनिवदुच्चस्थानस्थः, स्थूलो महान्वाताज्जातो बोम्बकः । एतेषां त्रयाणां शब्दानां लक्षणसंमिश्रणान्मिश्रः । पार्श्वदेवेनाप्युक्तमेतेषां लक्षणम्—

"बाहुल्यान्मन्द्रसंस्पर्शी माधुर्यगुणसंयुतः ।
खाहुलः स तु विज्ञेयो गीतध्वनिविशारदैः ॥
एरण्डकाण्डवद्यत्र क्षणिकांशविवर्जितः ।
निःसारो बोम्बकः स्थूलो बाहुल्येन तु मध्यभाक् ॥
बाहुल्यात्तारसंस्पर्शी माधुर्यगुणवर्जितः ।
नाराटो ऽयं परिज्ञेयो ध्वनिभेदविशारदैः ॥
एतद्ध्वनिगुणोन्मिश्रो यत्र सो ऽयं तु मिश्रकः ।" इति ॥

एतत्संमिश्रणादुक्तो मिश्रकः संनिपातिकः ॥ ४२ ॥
ननु रूक्षगुणो बोम्बः खाहुलः स्निग्धतायुतः ।
कथं तयोर्मिश्रणं स्याद्विरुद्धगुणयोगिनोः ॥ ४३ ॥
अत्रोच्यते परित्यागात्पारुष्यस्य विरोधिनः ।
अविरुद्धस्य माधुर्यस्थौल्यादेर्मिश्रणं मतम् ॥ ४४ ॥
एतेन घननिःसारगुणनाराटबोम्बयोः ।
विरुद्धगुणताक्षेपसमाधाने निवेदिते ॥ ४५ ॥
मिश्रस्य भेदाश्चत्वारो युक्तौ नाराटखाहुलौ ।
नाराटबोम्बकौ बोम्बखाहुलौ मिश्रितास्त्रयः ॥ ४६ ॥
निःसारतारूक्षताभ्यां हीनस्त्रितयमिश्रणात् ।
उत्तमोत्तम इत्युक्तः सुराणामिव शंकरः ॥ ४७ ॥
नाराटखाहुलोन्मिश्र उत्तमः खाहुलः पुनः ।

त्रयाणां लक्षणसंमिश्रणान्मिश्र इत्युक्तम् । तदाक्षिपति—नन्विति । बोम्बो रूक्षगुणः ; खाहुलः स्निग्धगुणः ; तौ हि परस्परविरुद्धौ ; तयोर्मिश्रितत्वं कथं घटते । परिहरति—अत्रोच्यत इति । यद्यपि विरुद्धगुणानां मिश्रितत्वं न संभवति ; तथाप्यविरुद्धगुणसमावेशान्मिश्रितत्वं संभवति । न हि माधुर्यादिगुणानां स्थौल्यादिगुणैः सह विरुद्धो विद्यत इति । एतेन वचनसंदर्भेण घननिःसारयोर्नाराटबोम्बयोः शब्दयोर्विरुद्धगुणतया आक्षेपः । तत्समाधानं चोक्तम् । मिश्रस्य भेदान्कथयति—मिश्रस्येति । नाराटखाहुलयोर्योग एकः । नाराटबोम्बयोर्योग एकः । बोम्बखाहुलयोर्योग एक इति त्रयाणां संमिश्रणे चैकः । तत्र विरुद्धगुणपरित्यागमाह— निःसारतेति । निःसारता घनत्वविरोधिनी । रूक्षता स्निग्धत्वविरोधिनी । अतस्तयोर्विरुद्धगुणाभ्यां मिश्रणं नास्ति । तथाविधो मिश्रको ऽत्युत्तम इत्याह— उत्तमोत्तम इति । उत्तमं मध्यममधमं च मिश्रं कथयति— नाराट इति । खाहुलनाराटयोर्लक्षणयोः संकर उत्तमो मिश्रभेदः । खाहुलबोम्ब-

बोम्बयुक्तो मध्यमः स्याद्बोम्बो नाराटसंयुतः ॥ ४८ ॥
शब्दानामधमः प्रोक्तः श्रीमत्सोढलसूनुना ।
निःसारतारूक्षताभ्यां युक्तः सर्वो ऽधमो मतः ॥ ४९ ॥
भवन्ति बहवो भेदा नानातद्गुणमिश्रणात् ।
कश्चित्स्यान्मधुरस्निग्धघनो ऽन्यः स्निग्धकोमलः ॥ ५० ॥
घनो ऽपरस्तु मधुरमृदुत्रिस्थानको ऽन्यकः
मृदुत्रिस्थानगम्भीरो ऽपरः स्निग्धो मृदुर्घनः ॥ ५१ ॥
त्रिस्थानो ऽन्यस्तु मधुरमृदुत्रिस्थानको घनः ।
अन्यस्तु मधुरस्निग्धमृदुत्रिस्थानको ऽपरः ॥ ५२ ॥
मधुरस्निग्धगम्भीरघनत्रिस्थानको ऽपरः ।
स्निग्धकोमलगम्भीरघनत्रिस्थानलीनकः ॥ ५३ ॥
अपरः स्निग्धमधुरकोमलः सान्द्रलीनकः ।
त्रिस्थानशोभी गम्भीर इति भेदा दशोदिताः ॥ ५४ ॥

कयोर्लक्षणसंयोगे मध्यमः । बोम्बकनाराटलक्षणसंयोगे ऽधमःशब्दः ; रञ्जकत्वाभावात् । अत्यधमं ध्वनिमाह—निःसारतेति । मिश्रस्य गुणसंमिश्रणात्खाहुला बहवो भेदा भवन्तीत्याह—भवन्तीति । कश्चिन्माधुर्यस्नेहघनत्वयुक्तः । कश्चित्स्नेहकोमलताघनत्वयुक्तः । कश्चिन्माधुर्यमार्दवत्रिस्थानव्याप्तियुक्तः । कश्चिन्मार्दवस्थानत्रयव्याप्तिगाम्भीर्ययुक्तः । कश्चित्स्नेहमार्दवघनत्वत्रिस्थानव्याप्तियुक्तः । कश्चिन्माधुर्यमार्दवघनत्वत्रिस्थानव्याप्तियुक्तः । अपरस्तु माधुर्यस्नेहमार्दवस्थानत्रयव्याप्तियुक्तः । कश्चिन्माधुर्यस्नेहगाम्भीर्यघनत्वत्रिस्थानव्याप्तियुक्तः । कश्चित्स्नेहकोमलतागाम्भीर्यघनत्वत्रिस्थानव्याप्तिलीनतायुक्तः । अन्यस्तु स्नेहमाधुर्यकोमलताघनत्वलीनत्वत्रिस्थानव्याप्तिगाम्भीर्ययुक्त इति दश भेदाः खाहुलनाराटयोः संमिश्रणे ।

खाहुलोन्मिश्रनाराटे ततः खाहुलबोम्बयोः ।
स्निग्धकोमलनिःसार एको ऽन्यो मधुरो मृदुः ॥ ५५ ॥
रूक्षो ऽन्यस्तु मृदुस्निग्धनिःसारोच्चतरः परः ।
कोमलः स्निग्धनिःसारः स्थूलो ऽन्यः स्निग्धकोमलः ॥ ५६ ॥
निःसारोच्चतरस्थूलः परो मधुरकोमलः ।
रूक्षनिःसारपीनश्च भेदाः षडिति कीर्तिताः ॥ ५७ ॥
नाराटे बोम्बभेदाः स्युर्घनत्रिस्थानरूक्षकः ।
एको ऽन्यो घनगम्भीररूक्षो ऽन्यो लीनपीवरः ॥ ५८ ॥
निःसाररूक्षो ऽन्यो लीनघनोच्चतरपीवरः ।
त्रिस्थानघनगम्भीरलीनरूक्षो ऽपरः परः ॥ ५९ ॥
त्रिस्थानलीननिःसाररूक्षः स्थूलः षडित्यमी ।
एते द्वंद्वजभेदाः स्युरथैते सान्निपातिकाः ॥ ६० ॥

खाहुलबोम्बकयोः संमिश्रणे च भेदानाह—तत इति। स्नेहकोमलतानिःसारतायुक्त एकः। कश्चिन्माधुर्यमार्दवरूक्षतायुक्तः। अन्यस्तु मार्दवस्नेहनिःसारतोच्चतरत्वयुक्तः। कश्चित्कोमलतास्नेहनिःसारतास्थौल्यत्वयुक्तः। अन्यस्तु स्नेहकोमलतोच्चतरत्वनिःसारतास्थौल्यत्वयुक्तः। कश्चिन्माधुर्यकोमलतारूक्षत्वनिःसारतास्थौल्यत्वयुक्तः। एवं खाहुलबोम्बकयोः संमिश्रणे षड्भेदाः। नाराटबोम्बकयोः संमिश्रणे भेदानाह—नाराटे बोम्बभेदा इति। घनत्वत्रिस्थानव्याप्तिरूक्षतायुक्त एकः। कश्चिद्घनत्वगाम्भीर्यरूक्षतायुक्तः। कश्चिल्लीनतास्थौल्यत्वनिःसारतारूक्षत्वयुक्तः। कश्चिल्लीनताघनत्वोच्चतरत्वस्थूलतायुक्तः। कश्चित्त्रिस्थानव्याप्तिघनत्वगाम्भीर्यलीनतारूक्षत्वयुक्तः। कश्चित्त्रिस्थानव्याप्तिलीनतानिःसारतारूक्षत्वस्थूलतायुक्तः। एवं नाराटबोम्बकयोः संमिश्रणे षड्भेदाः। एवं द्वितीययोगजा भेदा द्वाविंशतिरुक्ताः। अथ सान्निपातिकांस्त्रियोगजान्भेदानाह—अथैत इति। कश्चित्स्नेहत्रिस्थानव्याप्तिनिःसारतायुक्तः। कश्चिन्मार्दवमाधुर्यघन-

स्निग्धत्रिस्थाननिःसारो ऽन्यो मृदुर्मधुरो घनः ।
गम्भीरोच्चतरो रूक्षः परस्तु स्निग्धकोमलः ॥ ६१ ॥
घनलीनः पीवरोच्चतरो ऽन्यः स्निग्धकोमलः ।
त्रिस्थानलीननिःसारपीवरोच्चतरो ऽपरः ॥ ६२ ॥
कीर्तितो मधुरो लीनत्रिस्थानो रूक्षपीवरः ।
निःसारोच्चैस्तरो ऽन्यस्तु मधुरस्निग्धकोमलः ॥ ६३ ॥
त्रिस्थानघनगम्भीरलीन उच्चैस्तरः परः ।
मधुरो मृदुगम्भीरलीनत्रिस्थानरूक्षकः ॥ ६४ ॥
निःसारोच्चैस्तरो ऽन्यस्तु कोमलो मधुरो घनः ।
लीनत्रिस्थानरूक्षोच्चतरपीवरतायुतः ॥ ६५ ॥
अष्टाविति त्रिमिश्रस्य भेदाः सर्वे तु मिश्रजाः ।
मिलिता मुग्धबोधाय त्रिंशन्निःशङ्ककीर्तिताः ॥ ६६ ॥
अन्येषां सूक्ष्मभेदानां नान्तो ऽस्ति गुणसंकरात् ।
ते ग्रन्थविस्तरत्रासादस्माभिर्न समीरिताः ॥ ६७ ॥

त्वगाम्भीर्योच्चतरत्वरूक्षतायुक्तः । कश्चित्स्नेहकोमलताघनत्वलीनत्वस्थौल्यत्वोच्चतरत्वयुक्तः । कश्चित्स्नेहकोमलतात्रिस्थानव्याप्तिलीनत्वनिःसारतास्थौल्यत्वोच्चतरत्वयुक्तः । कश्चिन्माधुर्यलीनतात्रिस्थानव्याप्तिरूक्षतास्थौल्यत्वनिःसारतोच्चतरत्वयुक्तः । अन्यस्तु माधुर्यस्नेहकोमलतात्रिस्थाव्याप्तिघनत्वगाम्भीर्यलीनत्वोच्चतरत्वयुक्तः । परस्तु माधुर्यमार्दवगाम्भीर्यलीनतात्रिस्थानव्याप्तिरूक्षत्वनिःसारतोच्चतरत्वयुक्तः । अन्यस्तु कोमलतामाधुर्यघनत्वलीनतात्रिस्थानव्याप्तिरूक्षत्वोच्चतरत्वस्थौल्यतायुक्तः । एवं त्रयाणां लक्षणसंकरे ऽष्टौ भेदाः । सर्वे मिलिता मिश्रजास्त्रिंशत्संख्याकाः शार्ङ्गदेवेन कथिताः । अन्ये तु सूक्ष्मभेदा ग्रन्थविस्तरभयान्नोक्ताः ॥ २९—६७ ॥
इति शब्दभेदलक्षणम् ॥

मृष्टो मधुरचेहालत्रिस्थानकसुखावहाः ।
प्रचुरः कोमलो गाढः श्रावकः करुणो घनः ॥ ६८ ॥
स्निग्धः श्लक्ष्णो रक्तियुक्तश्च्छविमानिति सूरिभिः ।
गुणैरेभिः पञ्चदशभेदः शब्दो निगद्यते ॥ ६९ ॥
श्रोत्रनिर्वापको मृष्टस्त्रिषु [1]स्थानेष्वविस्तरः ।
मधुरः कीर्तितस्तैरः प्रौढो मधुररञ्जकः ॥ ७० ॥
नातिस्थूलो नातिकृशः स्निग्धश्चेहालको घनः ।
आकण्ठकुण्ठनं स स्यात्पुंसां स्त्रीणां तु सर्वदा ॥ ७१ ॥
त्रिषु स्थानेष्वेकरूपश्च्छविरक्त्यादिभिर्गुणैः ।

(क०) सौकुमार्यस्थौल्यादिगुणसांकर्येणानन्त्ये ऽपि शब्दानां तत्र गीतोपयोगिगुणभेदभिन्नान् शब्दानुद्दिश्य लक्षयति—**मृष्ट** इत्यादिना । ननु मृष्टादयो गुणिन एवोद्दिष्टाः । एभिर्गुणैरिति कथं तत्परामर्श उपपद्यत इति चेत्; उच्यते—'नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामति' इति न्यायेन मृष्टादिषु वर्तमानानां श्रोत्रनिर्वापकत्वादिगुणानां पुरः स्फूर्तिकत्वेन बुद्धिस्थतयैभिर्गुणैरिति निर्देशो निर्दोष एव । इहान्वयप्रकारस्तु छविमानित्येतदन्तः शब्द एभिर्गुणैः पञ्चदशभेदो निगद्यत इति । 'आकण्ठकुण्ठनं स स्यात्पुंसां स्त्रीणां तु सर्वदा' इत्यत्र यदातदा शब्दावध्याहार्यौ । यदा पुंसामाकण्ठकुण्ठनं भवति तदा स स्यादित्यन्वयः । स इति चेहालः परामृश्यते । पुंसामिति कर्तरि षष्ठी । आकण्ठकुण्ठनमिति कण्ठस्य ध्वनेरासमन्तात्स्थानत्रयेण कुण्ठनमनतिबहिर्मुखतया ग्रहणम् । तच्च मारुतस्य तादृशनिरोधाद्भवति; तदा हि ध्वनिर्नातिस्थूलकृशः सन्स्निग्धो भवति । **स्त्रीणां तु सर्वदेति** । स्त्रीणां

[1] स्थानेष्वनश्वरः

[2] शस्तः इति च सुधाकरस्य पाठः

त्रिस्थानो मनसो यस्तु सुखदः स सुखावहः ॥ ७२ ॥
श्रीशंकरप्रियेणोक्तः प्रचुरस्थूलतायुतः ।
कोमलो ऽन्वर्थनामैव कोकिलाध्वनिवन्मतः ॥ ७३ ॥
गाढस्तु प्रबलो दूरश्रवणाच्छ्रावको मतः ।
करुणः श्रोतृचित्तस्य करुणारसदीपकः ॥ ७४ ॥
दूरश्रवणयोग्यस्तु घनो ऽन्तःसारतायुतः ।
अरूक्षो दूरसंश्राव्यो बुधैः स्निग्धो ध्वनिः स्मृतः ॥ ७५ ॥
श्लक्ष्णस्तु तैलधारावदच्छिद्रो धीरसंमतः ।
अनुरक्तेस्तु जनको रक्तिमानभिधीयते ॥ ७६ ॥
धातुर्विमलकण्ठत्वाद्यः प्राज्ञैरुपलक्ष्यते ।
उज्ज्वलो ऽयमिति प्रोक्तश्छविमानिति स ध्वनिः ॥ ७७ ॥
रूक्षस्फुटितनिःसारकाकोलीकेटिकेणयः ।
कृशो भग्न इति प्रोक्ता दुष्टस्याष्टौ भिदा ध्वनेः ॥ ७८ ॥
रूक्षः स्निग्धत्वनिर्मुक्तः स्फुटितो ऽन्वर्थनामकः ।
एरण्डकाण्डनिःसारो निःसार इति कीर्तितः ॥ ७९ ॥
काकोल्किकाख्यः काकोलकुलनिर्घोषनिष्ठुरः ।
स्थानत्रयव्याप्तियुक्तो निर्गुणः केटिरुच्यते ॥ ८० ॥
कृच्छ्रोन्मीलन्मन्दतारः केणिरित्यभिधीयते ।
अतिसूक्ष्मः कृशो भग्नः खरोष्ट्रध्वनिनीरसः ॥ ८१ ॥

त्वाकण्ठकुण्ठनमन्तरेणापि तासां चेहालः स्वतः प्रवर्तत इत्यर्थः । अथवा आकण्ठकुण्ठनमिति कण्ठस्य मध्यमस्थानस्या ईषत्कुण्ठनं संकोचकरणम् । एवमपि ध्वनिः पूर्वोक्तरूपो भवति । अन्वयादिकमन्यत्समानमेव ।

अत्र कण्ठशब्दो मन्द्रतारस्थानयोर्हृन्मूर्ध्नोरप्युपलक्षणम् । तयोरपि तादृशस्य ध्वनेः संभवात् । आकण्ठकुण्ठने स स्यादिति पाठे त्वध्याहाराद्वाक्यभेदो न कर्तव्यः स्यात् । अर्थस्तु स एव । चेहालशब्दो रूढः । अन्येऽन्वर्थाः ॥ ६८—८१ ॥ इति शब्दगुणदोषाः ॥

(सु०) अथ शब्दगुणानाह—**मृष्ट** इति । एतैर्गुणैः पञ्चदश प्रकाराः शब्दाः । तेषां गुणानां लक्षणमाह—**श्रोत्रेति** । यस्तु श्रोत्रयोः सुखं जनयति, स मृष्टः ; स्थानत्रये ऽप्यनश्वरो ऽविनाश्यविकृतो मधुर इत्युच्यते ; शस्तः प्रशस्तो रमणीयः ; प्रौढः प्रौढिमान्प्रगल्भः ; अतिस्थूलतातिकृशाभ्यां हीनः ; स्निग्धः स्नेहवान् । एवंविधश्चेहालको ज्ञातव्यः । घनो निःसारताहीनः । स चेहालकः पुंसां कण्ठकुण्ठनपर्यन्तमेव भवति । यदा तु पुंसां तारुण्योदयसमये केनाप्यस्थिविशेषेण कण्ठ कुण्ठितो भवति तदा चेहालको ध्वनिर्नोत्पद्यते । स्त्रीणां तु सर्वदासौ भवति । स्थानत्रये ऽपि छविरक्त्यादिभिरुपलक्षित एकरूपो ऽविकृतस्त्रिस्थान इत्युच्यते । यस्तु मनसः सुखदायकः स सुखावहः । स्थूलतायुक्तः प्रचुरः । यत्र तु सौकुमार्यं स कोमलः ; कोकिलाध्वनिसदृशः । प्रबलत्वेन प्रसरन्नेव यः श्रूयते स गाढः । यस्तु दूराच्छ्रूयते स श्रावकः । यः श्रोतुश्चित्ते करुणामुत्पादयति स करुणः । यस्तु दूरश्रवणयोग्यो ऽन्तःसारश्च स घन इत्युच्यते । यस्तु दूराच्छ्रूयते रूक्षताहीनश्च स स्निग्ध इत्युच्यते । यस्तु तैलधारावच्छिद्रहीनः स श्लक्ष्णः । यस्त्वनुरागमुत्पादयति स रक्तिमान् । यस्तु सहृदयैरुज्ज्वल इति प्रतीयते स छविमान् । तथा च लोके व्यवहरन्ति 'यतश्च शब्दे ज्योतिः प्रतीयते' इति ॥ ६८-७८ ॥ इति शब्दगुणाः ॥

अथ शब्ददोषानाह—**रूक्षेति** । अष्टौ दुष्टस्य ध्वनेर्भेदा भवन्ति । तेषां लक्षणमाह—**रूक्षेति** । स्नेहाभावो रूक्षः । यस्तु स्फुटित इव भग्न इव प्रतिभाति स स्फुटित इत्युच्यते । यस्त्वेरण्डकाण्डवदन्तःसारहीनः स निःसारः । यस्तु काकशब्दवन्निष्ठुरः स काकोलीत्युच्यते । यस्तु स्थानत्रयं व्याप्नोति, परं तु माधुर्यादिगुणहीनः स केटिरित्युच्यते । यस्य महता क्लेशेन तारमन्द्रव्याप्तिः स केणिः । सूक्ष्मः कृशः, गर्दभकरभध्वनिवन्नीरसो भग्न इत्युच्यते ॥ ७९—८१ ॥ इति शब्ददोषाः ॥

रागाभिव्यक्तिशक्तत्वमनभ्यासे ऽपि यद्ध्वनेः ।
तच्छारीरमिति प्रोक्तं शरीरेण सहोद्भवात् ॥ ८२ ॥
तारानुध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः ।
घनतास्निग्धताकान्तिप्राचुर्यादिगुणैर्युतम् ॥ ८३ ॥
तत्सुशारीरमित्युक्तं लक्ष्यलक्षणकोविदैः ।
अनुस्वानविहीनत्वं रूक्षत्वं व्यक्तरक्तिता ॥ ८४ ॥
निःसारता विस्वरता काकित्वं स्थानविच्युतिः ।
कार्श्यं कार्कश्यमित्याद्यैः कुशारीरं तु दूषणैः ॥ ८५ ॥
विद्यादानेन तपसा भक्त्या वा पार्वतीपतेः ।
प्रभूतभाग्यविभवैः सुशारीरमवाप्यते ॥ ८६ ॥

(क०) गीतहेतुतया गायनानन्तरोद्दिष्टं शारीरं लक्षयति—**रागाभिव्यक्तीति**। अनभ्यासे ऽपि ध्वनेर्यद्रागाभिव्यक्तिशक्तत्वं तच्छारीरमित्यनेन शब्दशारीरयोर्धर्मधर्मिभावेन भेदो दर्शितः। **रागाभिव्यक्तिशक्तत्वमिति**। रागस्य ग्रहांशादिस्वरसंनिवेशविशेषवतः श्रीरागादेरभिव्यक्तिरवैस्वर्येणासांकर्येण च प्रकाशनम्। तत्र शक्तत्वं शक्तिमत्त्वम्। शक्तिर्नामात्र रागाभिव्यक्तिबीजरूपः संस्कारविशेषो यां विना राग एव न प्रसरेत्। प्रसृतं वा हसनीयं भवेत्। अत एवानभ्यासे ऽपीत्युक्तम्। अयमभिप्रायः—शक्तौ सत्यामभ्यासे कृते रागाभिव्यक्तिः सुतरां भवति। असत्यां तु तस्यामभ्यासेनैव सा न भवतीति। एतदेवाभिसंधाय '**शरीरेण सहोद्भवात्**' इति शारीरशब्दस्य व्युत्पत्तिर्दर्शिता। यथा ध्वनिः शरीरेण सहोद्भूतो भवति; तथा तस्य रागाभिव्यक्तिशक्तत्वमपि शरीरेण

सहोद्भूतं भवति। न ह्यभ्यासेनागन्तुकमित्यर्थः। तस्य गुणदोषान्क्रमेण दर्शयति—**तारानुध्वनीत्यादिना**। सुशारीरप्राप्तौ हेतुन्दर्शयति—**विद्यादानेनेत्यादिना** ॥ ८२—८६ ॥ इति शारीरलक्षणम् ॥

(सु०) अथ शारीरं लक्षयति—**रागाभिव्यक्तीति**। अभ्यासाभावे ऽपि ध्वने रागमभिव्यञ्जयितुं यत्सामर्थ्यं तच्छारीरमित्युच्यते। एतस्य व्युत्पत्तिं दर्शयति—**शरीरेणेति**। शरीरेण सहोत्पन्नत्वाच्छारीरमित्युच्यते। स्वभावसिद्धमेतत्प्रयत्नेन न साध्यमित्यर्थः। अथ शारीरगुणान्कथयति—**तारेति**। तार इति तारव्याप्तिः; अनुध्वनिरनुरणनयुक्तत्वम्; माधुर्यं रमणीयता; रक्ती रञ्जकत्वम्; गाम्भीर्यमगाधत्वम्; मार्दवं सौकुमार्यम्; घनता ससारत्वम्; कान्तिः पूर्वोक्ता च्छविः; आदिशब्देन शब्दोक्ता अन्ये गुणास्तैर्युक्तं शारीरं सुशारीरमित्युच्यते। शारीरदोषानाह—**अनुस्वानविहीनत्वमिति**। पूर्वोक्तगुणविपर्यासरूपैरेतैर्दूषणैर्युक्तं दुष्टं शारीरम्। अदुष्टं शारीरं तु महता भाग्येनानेकोपायैः प्राप्यत इत्याह—**विद्यादानेनेति**। **संगीतसमयसारकारेण** शारीरस्य चातुर्विध्यमुक्तम्—

"अन्तरेण यदभ्यासं रागव्यक्तिनिबन्धनम्।
शरीरेण सहोत्पन्नं शारीरं परिकीर्तितम् ॥
चतुर्विधं भवेत्तच्च कडालं मधुरं तथा।
पेशलं बहुभङ्गीति तेषां लक्षणमुच्यते ॥
स्थानत्रये ऽपि कठिनं कडालं परिकीर्तितम्।
मन्द्रे मध्ये च माधुर्ये शारीरं मधुरं मतम् ॥
शारीरं पेशलं ज्ञेयं तारे रागप्रकाशकम्।
तच्छारीरगुणा मिश्रा यत्र तद्बहुभङ्गिकम् ॥
कडालमधुरं चैव ततो मधुरपेशलम्।
कडालपेशलं चैव शारीरं त्रयमिश्रकम् ॥
एवं चतुर्विधं ज्ञेयं शारीरं बहुभङ्गिकम्।" इति ॥

॥ ८२—८६ ॥ इति शारीरलक्षणम् ॥

स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः ।
तस्य भेदास्तु तिरिपः स्फुरितः कम्पितस्तथा ॥ ८७ ॥
लीन आन्दोलितवलित्रिभिन्नकुरुलाहताः ।
उल्लासितः प्लावितश्च गुम्फितो मुद्रितस्तथा ॥ ८८ ॥
नामितो मिश्रितः पञ्चदशैते परिकीर्तिताः ।
लघिष्ठडमरुध्वानकम्पानुकृतिसुन्दरः ॥ ८९ ॥
द्रुततुर्यांशवेगेन तिरिपः परिकीर्तितः ।
वेगे द्रुततृतीयांशसंमिते स्फुरितो मतः ॥ ९० ॥
द्रुतार्धमानवेगेन कम्पितं गमकं विदुः ।
लीनस्द्रुततु वेगेनान्दोलितो लघुवेगतः ॥ ९१ ॥
वलिर्विविधवक्रत्वयुक्तवेगवशाद्भवेत् ।
त्रिभिन्नस्तु त्रिषु स्थानेष्वविश्रान्तघनस्वरः ॥ ९२ ॥
कुरुलो वलिरेव स्याद्ग्रन्थिलः कण्ठकोमलः ।
स्वरमग्रिममाहत्य निवृत्तस्त्वाहतो मतः ॥ ९३ ॥
उल्लासितः स तु प्रोक्तो यः स्वरानुत्तरोत्तरान् ।
क्रमाद्गच्छेत्प्लावितस्तु प्लुतमानेन कम्पनम् ॥ ९४ ॥
हृदयंगमहुंकारगम्भीरो गुम्फितो भवेत् ।
मुखमुद्रणसंभूतो मुद्रितो गमको मतः ॥ ९५ ॥
स्वराणां नमनादुक्तो नामितो ध्वनिवेदिभिः ।

(क०) अथ गमकान्सामान्यविशेषाभ्यां लक्षयति—**स्वरस्य कम्प** इत्यादिना । श्रोतृचित्तसुखावह इत्यनेन विशिष्टस्यैव कम्पस्य गमकत्वमिष्टम् । अन्यथा विपरीतस्यापि तस्य गमकत्वं स्यात् ॥ तिरिपादीनां

**एतेषां मिश्रणान्मिश्रस्तस्य स्युर्भूरयो भिदाः ॥ ९६ ॥**
**तेषां तु स्थायवागेषु विवृतिः संविधास्यते ।**

लक्षणानि निगदव्याख्यातानि ॥ **एतेषां मिश्रणान्मिश्र** इति । एतेषां तिरिपादीनां मध्ये द्वित्रिचतुःप्रभृतीनां यथायोगं मिश्रणमत्र विवक्षितम् । न तु सर्वेषामेव मिश्रणं विवक्षितम् । अन्यथा '**तस्य स्युर्भूरयो भिदाः**' इत्युत्तरं वचनमनुपपन्नं स्यात् । सर्वमिश्रणात्मकस्य तस्यैकत्वात् । ननु सर्वमिश्रणेऽपि संनिवेशविशेषबाहुल्यादनेकत्वमुपपद्यत इति चेन्न; वक्ष्यमाणेषु स्थायेष्वेकानेकस्वराश्रयत्वाभ्यां यथायोगं द्वित्र्यादीनामेव मिश्रप्रयोगदर्शनात् ॥ एतदेवाभिसंधाय तत्प्रयोगस्थलं दर्शयति—**तेषां त्विति** । तुशब्दो भिन्नक्रमः । विवृतिस्त्विति संबन्धः । विवृतिर्विवरणं प्रकाशनमित्यर्थः । स्थायवागेषु स्थायाश्रिता वागाः । स्थायो रागावयवः । वागो गमकइति वक्ष्यते । तेषु रागावयवाश्रितगमकेषु । तेषां मिश्रभेदानां विवृतिस्तु संविधास्यते ; समनन्तरमेव करिष्यत इत्यर्थः ॥ ८७—९६- ॥
इति गमकलक्षणम् ॥

(सु०) गमकान्निरूपयितुमाह—स्वरस्य कम्प इति । श्रोतुश्चित्तसुखदायको यः स्वरस्य कम्पः स गमक इत्युच्यते । गमकशब्दस्य व्युत्पत्तिश्च कथिता पार्श्वदेवेन—

> "स्वश्रुतिस्थानसंभूतां छायां श्रुत्यन्तराश्रयाम् ।
> स्वरो यद्गमयेद्गीते गमको ऽसौ निरूपितः ॥" इति ॥

तस्य भेदानाह—तस्य भेदा इति । तस्य गमकस्य पञ्चदश भेदा भवन्ति । तेषां लक्षणमाह—लघिष्ठेति । अल्पस्य डमरोर्ध्वनि यः कम्पस्तद्वद्रमणीयः ; द्रुतस्य चतुर्थांशवेगेन यः स्वरस्य कम्पः स तिरिप इत्यभिधीयते । स्वरस्य कम्प इति सामान्यलक्षणादनुवर्तनीयम् । 'सामान्यलक्षणानुवृत्तौ च विशेषलक्षणं प्रवर्तते' इति न्यायाद्द्रुतस्य तृतीयभागसंमितो यदि वेगः स्वरकम्पो भवति ; तदा स्फु-

**रागस्यावयः स्थायो वागो गमक उच्यते ॥ ९७ ॥**
**तत्रोक्तं लक्ष्म वागानां स्थायानां तूच्यते ऽधुना ।**
**वागानामपि केषांचित्प्रसङ्गाद्ब्रूम्हि लक्षणम् ॥ ९८ ॥**
**ते च शब्दस्य ढालस्य लवन्या वहनेरपि ।**

रिताख्यो गमकः । द्रुतस्यार्धमानेन कम्पश्चेत्कम्पिताख्यो गमकः । द्रुतमानेन स्वराणां कम्पश्चेत्तदा लीनाख्यो गमकः । कश्चिल्लघुवेगतो येन लयेन गीयते द्रुतेन मध्यमेन विलम्बितेन वा तत्प्रमाणके स्वरस्य कम्प आन्दोलिताख्यो गमकः । कचिल्लघुमानत इति पाठः । अनेकविधवक्रत्वयुक्तवेगवतां स्वराणां कम्पो वलिरित्युच्यते । स्थानत्रये ऽप्यविश्रान्ताः निबिडाः प्रसृता स्वरा यस्मिन्स्स त्रिभिन्नः । ग्रन्थिसंयुक्तःकण्ठे समुत्पन्नः कोमलो वलिरिव कुरुल इत्युच्यते । अग्रिमं पुरतः स्थितं स्वरमाहत्य शीघ्रं सकृत्स्पृष्ट्वा निवृत्त आहत इत्युच्यते । यस्तूत्तरोत्तरं क्रमात्स्वरानारोहति स उल्लासित इत्युच्यते । प्लुतमानेन कम्पितः प्लावित इत्युच्यते । यस्तु हृदयंगमो मनोहरः ; हुंकारो हुमिति वर्णो गर्भे ऽन्तर्यस्य स हुम्फितः । मुखं मुद्रयित्वा यः कृतः स्वरस्य कम्पः स मुद्रितः । स्वराणां नमनं मन्द्रस्थान उच्चारणमवरोहणं वा तद्युक्ते नामित इत्युच्यते । एतेषां लक्षणसंमिश्रणान्मिश्रः ; तस्य बहवो भेदाः स्थायप्रकरणे निरूपयिष्यन्ते ॥ ८७—९६- ॥ इति गमकलक्षणम् ॥

(क०) गमकाश्रयत्वेन तदनन्तरमुद्दिष्टानां स्थायानां सामान्यलक्षणमाह—**रागस्यावयव** इति । अवयव एकदेशः । सो ऽप्यत्र न्यासापन्याससंन्यासविन्यासेष्वन्यतमस्वरविश्रान्तत्वेन प्रयुक्तोऽंशादिकतिपयस्वरसंदर्भो वेदितव्यः । **वागो गमक उच्यत** इति । गमक एव देशभाषया वाग इत्युच्यत इत्यर्थः । **वागानामपीति** । केषांचिद्वागानां मिश्रभेदानां लक्षणमपि प्रसङ्गात्स्थायलक्षणानन्तरं तन्मिश्रभेदप्रस्तावादित्यर्थः ॥ अथ स्थायभेदानुद्दिशति—**ते च शब्दस्येत्यादिना** । अत्र शब्दस्येत्यादिकया षष्ठ्या प्रतिसंबन्धिनामुद्देशेन तत्संबन्धिनः स्थाया उद्दिष्टा

वाद्यशब्दस्य यन्त्रस्य च्छायायाः स्वरलङ्घितः ॥ ९९ ॥
प्रेरितस्तीक्ष्ण इत्युक्ता व्यक्तासंकीर्णलक्षणाः ।
भजनस्य स्थापनाया गतेर्नादध्वनिच्छवेः ॥ १०० ॥
रक्तेर्द्रुतस्य शब्दस्य भृतस्यांशावधानयोः ।
अपस्थानस्य निकृतेः करुणाविविधत्वयोः ॥ १०१ ॥
गात्रोपशमयोः काण्डारणानिर्जवनान्वितौ ।
गाढो ललितगाढश्च ललितो लुलितः समः ॥ १०२ ॥
कोमलः प्रस्रुतः स्निग्धचोक्षोचितसुदेशिकाः ।
अपेक्षितश्च घोषश्च स्वरस्यैते प्रसिद्धितः ॥ १०३ ॥
स्थायानां गुणभेदेन व्यपदेशा निरूपिताः ।

वेदितव्याः । **व्यक्तासंकीर्णलक्षणा** इति । व्यक्ताः प्रसिद्धाश्चासंकीर्णानि विविक्तानि लक्षणानि स्वरूपाणि येषां त इति तथोक्ताः ॥ -९७—९९- ॥ इत्यसंकीर्णलक्षणाः प्रसिद्धा दश स्थायाः ॥

(सु०) स्थायं निरूपयितुमाह—रागस्येति । रागस्यावयवो भागः स्थाय इत्युच्यते । गमकश्च वाग इत्युच्यते । तत्र गमकानां लक्षणमुक्तम् । अधुना स्थायानां लक्षणमुच्यते । किमर्थमिदमुक्तम् । गायकानां स्थाया वागा इति प्रसिद्धेः । तत्र कथं वागानां लक्षणं नोक्तमिति शङ्कां निवारयितुं गमका एव वागा इत्युक्तम् । स्थायप्रसङ्गाद्वागानां गमकानामपि केषांचिल्लक्षणं वच्मि कथयामि । स्थायान्विभजते—ते चेति । ते च स्थायाः; शब्दसंबन्धिनः; ढाली वक्ष्यमाणलक्षणः; तत्संबन्धिनः; लवनीसंबन्धिनः; वहनीसंबन्धिनः; वाद्यशब्दसंबन्धिनः; यन्त्रसंबन्धिनः; छायासंबन्धिनः; स्वरलङ्घितादयस्त्रयश्चेति दशगुणजनितभेदाः स्थायाः ॥ -९७—९९- ॥ इत्यसंकीर्णलक्षणाः प्रसिद्धा दश स्थायाः ॥

(क०) **गुणभेदेन व्यपदेशा** इति । भजनस्येत्यादिनोद्दिष्टानां स्थायानां गुणभेदेन रागातिशयाधानरूपभजनादिगुणानां भेदेन प्रसिद्धितो

वहाक्षराडम्बरयोरुल्लासिततरङ्गितौ ॥ १०४ ॥
प्रलम्बितो ऽवस्खलितस्त्रोटितः संप्रविष्टकः ।
उत्प्रविष्टो निःसरणो भ्रामितो दीर्घकम्पितः ॥ १०५ ॥
प्रतिग्राह्योल्लासितश्च स्यादलम्बविलम्बकः ।
स्यात्त्रोटितप्रतीष्टो ऽपि प्रसृताकुञ्चितः स्थिरः ॥ १०६ ॥
स्थायुकः क्षिप्तसूक्ष्मान्तावित्यसंकीर्णलक्षणाः ।
प्रकृतिस्थस्य शब्दस्य कलाक्रमणयोरपि ॥ १०७ ॥
घटनायाः सुखस्यापि चाले जीवस्वरस्य च ।

गीतज्ञप्रसिद्धेर्हेतोर्व्यपदेशाः संज्ञा निरूपिता इत्यन्वितोऽर्थः । भजनस्थाया-दीनां प्राधान्याद्धर्मभेदेनैव भेदः; नात्यन्तं धर्मिभेद इति भावः । तेनैते संकीर्णा इति भावः ॥ -१००—१०३- ॥ इति त्रयस्त्रिंशद्गुण-जनिताः प्रसिद्धाः स्थायाः ॥

(सु०) संकीर्णस्थायान्विभजते—भजनस्येति । भजनसंबन्धिनः; स्थापनासंबन्धिनः; गतिसंबन्धिनः; नादसंबन्धिनः; ध्वनिसंबन्धिनः; छविसंबन्धिनः; रक्तिसंबन्धिनः; द्रुतसंबन्धिनः; भूतसंबन्धिनः; अंशसं-बन्धिनः; अवधानसंबन्धिनः; अपस्थानसंबन्धिनः; निकृतिसंबन्धिनः; करुणासंबन्धिनः; विविधत्वं भङ्गी, तत्संबन्धिनः; गात्रसंबन्धिनः; उपशम-संबन्धिनः; काण्डारणासंबन्धिनः; निर्जवनसंबन्धिनः; गाढललितगाढादयश्चा-पेक्षितान्ता द्वादश; तत्संबन्धिनः; घोषसंबन्धिनः; स्वरसंबन्धिनश्चेति त्रयस्त्रि-शद्गुणजनितभेदाः स्थायाः ॥ -१००—१०३- ॥ इति त्रयस्त्रिंशद्गुणजनिताः प्रसिद्धाः स्थायाः ॥

(क०) **असंकीर्णलक्षणा** इति । वहाक्षरेत्यादिनोद्दिष्टा असंकीर्ण-लक्षणाः । असंकीर्णं पृथग्भूतं लक्षणं येषां ते तथोक्ताः । प्रथमोद्दिष्टानामे-

वेदध्वनेर्घनत्वस्य शिथिलो ऽवघटः प्लुतः ॥ १०८ ॥
रागेष्टोपस्वराभासो बद्धः कलरवस्य च ।
छान्दसः सुकराभासः संहितो लघुरन्तरः ॥ १०९ ॥
वक्रो दीप्तप्रसन्नश्च स्यात्प्रसन्नमृदुर्गुरुः ।
ह्रस्वः शिथिलगाढश्च दीर्घो ऽसाधारणस्ततः ॥ ११० ॥
साधारणो निराधारो दुष्कराभासनामकः ।
मिश्रश्चैते ऽपि संकीर्णा गुणैर्भिन्नाश्च पूर्ववत् ॥ १११ ॥
इति षण्णवतिः स्थायाः शार्ङ्गदेवेन कीर्तिताः ।
मुक्तशब्दप्रतिग्राह्याः स्थायाः शब्दस्य कीर्तिताः ॥ ११२ ॥
ढालो मुक्ताफलस्येव चलनं लुण्ठनात्मकम् ।
स एषु ते स्युर्ढालस्य नमनं त्वतिकोमलम् ॥ ११३ ॥
लवनी तद्युजस्थाया लवन्याः परिकीर्तिताः ।

तेषां चासंकीर्णलक्षणत्वाविशेषेऽपि तेषां प्रसिद्धत्वमेतेषामप्रसिद्धत्वमिति भेदो द्रष्टव्यः । अत एव पृथगुद्देशोऽत्र युक्तः । **एते ऽपि संकीर्णा** इति । एते प्रकृतिस्थस्येत्यादिनोद्दिष्टाः स्थाया अपि संकीर्णाः । अत्रापि-शब्दः समुच्चये । तेनायमर्थः । भजनस्थायादयो यद्वत्संकीर्णास्तद्वदेते च संकीर्णा नात्यन्तं पृथग्भूतस्वरूपाः । किंतु पूर्ववद्भजनस्थायादय इव गुणैः प्रकृतिस्थशब्दवत्तादिभिर्भिन्नाः पृथग्भूताः । उभयेषामपि गुणभिन्नत्वाविशेषे ऽपि तेषां प्रसिद्धित एतेषामप्रसिद्धितो भेदो द्रष्टव्यः । अतस्तेभ्यः पृथगुद्देशोऽप्येतेषामुपपन्न एव । अथैतेषां क्रमेण लक्षणान्याह—**मुक्तशब्दप्रतिग्राह्या** इत्यादिना । मुक्तश्चासौ शब्दश्चेति मुक्तशब्दः । प्रतिग्रहीतुं योग्याः प्रतिग्राह्याः ; मुक्तशब्देन प्रतिग्राह्याः । अयमर्थः—पूर्वस्थायो यस्मि-

यत्तु कम्पनमारोहिण्यवरोहिणि वा भवेत् ॥ ११४ ॥
वहनी साथ संचारिण्यपि वा स्थिरकम्पनम् ।
सा गीतालप्तिसंबन्धभेदेन द्विविधा मता ॥ ११५ ॥
पुनर्द्विधा स्थिरा वेगाढ्या पुनस्त्रिविधोदिता ।
हृद्या कण्ठ्या शिरस्या च देहस्था हृदयोद्भवा ॥ ११६ ॥
वहनी स्यात्पुनर्द्वेधा खुत्तोल्कुल्लेति भेदतः ।
यस्यामन्तर्विशन्तीव स्वराः खुत्तेति सा मता ॥ ११७ ॥
सोल्कुल्लेत्युदिता यस्यां निर्यान्तीवोपरि स्वराः ।
वलिर्या गमकेषूक्ता साप्येवंविधभेदभाक् ॥ ११८ ॥
वहनी येषु ते स्थाया वहन्यः परिभाषिताः ।
रागमग्ना वाद्यशब्दा येषु ते वाद्यशब्दजाः ॥ ११९ ॥
ये यन्त्रेष्वेव दृश्यन्ते बाहुल्यात्ते तु यन्त्रजाः ।
छाया काकुः षट्प्रकारा स्वररागान्यरागजा ॥ १२० ॥
स्याद्देशक्षेत्रयन्त्राणां तल्लक्षणमथोच्यते ।
श्रुतिन्यूनाधिकत्वेन या स्वरान्तरसंश्रया ॥ १२१ ॥

न्ध्वनौ मुच्यत उत्तरस्थायो चक्रवालरीत्या तत्रैव प्रतिगृह्यते चेत्तदा शब्दस्थाया इति व्यपदिश्यन्त इत्यर्थः ॥ वहन्यवान्तरभेदप्रदर्शनार्थं सा गीतालप्तिसंबन्धभेदेनेत्युक्तम् । तत्र गीतालप्त्योरुभयोरपि रञ्जकस्वरसंदर्भत्वाविशेषात्कथं भेदकत्वमिति चेत् ; उच्यते—गीतशब्दो यद्यपि निबद्धानिबद्धसामान्यवचनस्तथाप्यनिबद्धविशेषवचनालप्तिशब्दसमभिव्याहाराद्गोबलीवर्दन्यायेनात्र निबद्धवचनत्वेन व्यवस्थापित इति । छाया काकुरिति । छायेत्यस्य विवरणं काकुरिति । काकुर्ध्वनेर्विकारः ॥ श्रुतिन्यूनाधिकत्वे-

स्वरान्तरस्य रागे स्यात्स्वरकाकुरसौ मता ।
या रागस्य निजच्छाया रागकाकुं तु तां विदुः ॥ १२२ ॥
सा त्वन्यरागकाकुर्या रागे रागान्तराश्रया ।
सा देशकाकुर्या रागे भवेद्देशस्वभावतः ॥ १२३ ॥
शरीरं क्षेत्रमित्युक्तं प्रतिक्षेत्रं निसर्गतः ।
रागे नानाविधा काकुः क्षेत्रकाकुरिति स्मृता ॥ १२४ ॥
वीणावंशादियन्त्रोत्था यन्त्रकाकुः सतां मता ।
अन्यच्छायाप्रवृत्तौ ये छायान्तरमुपाश्रिताः ॥ १२५ ॥
छायायास्ते मताः स्थाया गीतविद्याविशारदैः ।
मध्ये मध्ये स्वरान्भूरील्लँङ्घयन्स्वरलङ्घितः ॥ १२६ ॥
तिर्यगूर्ध्वमधस्ताच्च प्रेरितः प्रेरितैः स्वरैः ।
स्वरः पूर्णश्रुतिस्तारे तीक्ष्णवत्तीक्ष्ण उच्यते ॥ १२७ ॥
रागस्यातिशयाधानं प्रयत्नाद्भजनं मतम् ।
तद्युक्ता भजनस्य स्युः स्थापनायास्तु ते मताः ॥ १२८ ॥
स्थापयित्वा स्थापयित्वा येषां प्रतिपदं कृतिः ।
सविलासास्ति गीतस्य मत्तमातङ्गवद्गतिः ॥ १२९ ॥
तद्युक्तास्तु गतेः स्थायाः स्निग्धो माधुर्यमांसलः ।
बहुलो येषु नादः स्यात्ते नादस्य प्रकीर्तिताः ॥ १३० ॥
अतिदीर्घप्रयोगा स्युः स्थाया ये ते ध्वनेर्मताः ।

नेति । श्रुतीनां छन्दोवत्यादीनां पूर्वोक्तानां न्यूनत्वेन तत्तत्स्वरोक्तसंख्यातोऽल्पत्वेनाधिकत्वेन तादृशसंख्यातो बहुत्वेन वा स्वरान्तरसंश्रया छाया स्वरान्तरस्य यदि स्यादापाततः श्रवणसाम्येन कृता भवेदसौ स्वरकाकुरिति

**युक्ताः कोमलया कान्त्या छवेः स्थाया निरूपिताः ॥ १३१ ॥**
**रक्तेरुत्कर्षतो रक्तेरुक्ताः स्थाया मनीषिभिः ।**

मता। यथा हि चतुःश्रुतिकस्य षड्जस्य निषादकर्तृकाक्रमणेन द्विश्रुतित्वे सति श्रुतिन्यूनत्वेन निषादवत्प्रतीतिः। यथा च द्विश्रुतिकस्य निषादस्य षड्जाद्यश्रुतिद्वयाश्रयणेन चतुःश्रुतित्वे सति श्रुत्यधिकत्वेन षड्जवत्प्रतीतिश्च

(सु०) अन्यान्विंशतिमसंकीर्णान्विभजते—**वहाश्चराडम्बरयो**रिति। षष्ठ्यन्तैः सह तत्संबन्धिन इति प्रथमान्ता स्थाया एव। अन्यान्संकीर्णान् त्रयस्त्रिंशतं स्थायान्विभजते—**प्रकृतिस्थस्ये**त्यादिना। सर्वे स्थाया मिलिताः षण्णवतिः। तेषां लक्षणमाह—**मुक्तशब्दे**ति। मुक्तशब्देन मोचितशब्देन प्रतिग्रहीताः स्थाया शब्दसंबन्धिनः; मुक्ताफलस्य यद्वाक्षमालोलनं लोके प्रसिद्धं तद्वड्ढालो येषु ते ढालसंबन्धिनः। ढालस्य च लक्षणमुक्तं पार्श्वदेवेन—

"वृत्तमौक्तिकवत्काचभूतले विरसद्रुतौ।
श्रुतिः प्रवर्तते क्षिप्रं यत्र ढालं तदुच्यते॥" इति॥

अतिकोमलं सुकुमारं स्वराणां नमनमथ उच्चारणं लवनीत्युच्यते; तदुक्ताः स्थाया लवनीसंबन्धिन इति। वहनीं लक्षयति—**यत्वि**ति। आरोहणे अवरोहणे वा वर्णे स्वराणां कम्पनं वहनीत्युच्यते। संचारिण्यपि वर्णे स्थिरं कम्पनं वहनीत्युच्यते। सा वहनी द्विविधा; गीतवहनीरालप्तिवहनीरिति। पुनरपि द्विविधा; स्थिरा, वेगाद्या चेति। पुनरपि त्रिविधा; हृद्या, कण्ठ्या, शिरस्या चेति। हृदयाद्भवा पुनरपि द्विविधा; खुत्ता, उत्फुल्ला चेति। तयोर्लक्षणमाह—**यस्यामि**ति। यस्यां स्वरा अन्तर्विशन्त इव श्रूयन्ते सा खुत्ता। यस्यां तूपरिनिर्गच्छन्त इव स्वराः श्रूयन्ते सोत्फुल्ला। वहनीभेदान्वलावतिदिशति—**बलि**रिति। एवंविधा वहनीर्येषु स्थायेषु ते वहनीसंबन्धिनः। अन्ये वहनीभेदा अन्वर्थनामत्वान्न लक्षिताः। वाद्यशब्दस्य स्थायाँल्लक्षयति—**रागमग्ना** इति। रागमग्ना रागानुरञ्जिता ये वीणादिष्वेव बाहुल्येन प्रयोगा दृश्यन्ते; ते यन्त्रसंबन्धिनः। छायाभेदसंबन्धिनः स्थायान्कथयितुमाह—**छाया काकु**रिति। छाया काकुरित्युच्यते। सा हि षड्विधा; स्वरकाकुः, रागकाकुः, अन्य-

द्रुतस्यान्वर्थनामानो भृतस्य भरणाद्ध्वनेः ॥ १३२ ॥
रागान्तरस्यावयवो रागेंऽशः स च सप्तधा ।

यतो ध्वनिविकाराद्भवति सा स्वरकाकुरिति मन्तव्येत्यर्थः । एवं स्वरान्तरेष्वपि द्रष्टव्यम् । **रागान्तरस्यावयवो रागेंऽश** इति । रागे बहुलीकोला-

रागकाकुः, देशकाकुः, क्षेत्रकाकुः, यन्त्रकाकुरिति । एतासां लक्षणं कथयति—**तल्लक्षणमिति** । अन्यस्वरस्यान्यस्मिन्स्वरे या छाया श्रुतीनां न्यूनत्वेनाधिक्येन वा जायते सा स्वरकाकुः । सा च रागे भवति । या रागस्य निजा मुख्या छाया सा रागकाकुः । अन्यरागस्यान्यस्मिन्रागे या छाया सा अन्यरागकाकुः । देशे देशे देशस्वभावेन या छाया सा देशकाकुः । क्षेत्रं देहमुच्यते । मनुष्याणां प्रतिदेहं यश्छायाविशेषः सा क्षेत्रकाकुः । वीणावंशादियन्त्रादुत्थिता यन्त्र एव या प्रतीयते रागच्छाया सा यन्त्रकाकुः । एवं स्थायकारणभूतां छायां निरूप्य स्थायं निरूपयति—**अन्यच्छायेति** । अन्यस्याश्छायायाः प्रवृत्तौ गाने प्रकृते ऽन्यच्छायाश्रयेण ये स्थायाः प्रवर्तन्ते ते छायासंबन्धिनः । स्वरलङ्घिताख्यं स्थायं लक्षयति—**मध्ये मध्य इति** । मध्ये मध्ये बहून् त्रिचतुरान्स्वराँल्लङ्घयन्यः प्रवर्तते स स्वरलङ्घितः । ऊर्ध्वमधस्तिर्यक्त्वप्रेरितैः स्वरैर्यः प्रवर्तते स प्रेरितः । यः स्वरस्थाने ऽपि पूर्णश्रुतिः सन् तीक्ष्णवत्सूच्यग्रादिवत्प्रतिभासते स तीक्ष्ण इति ॥ -१०४—१२७ ॥ इत्यसंकीर्णा दश स्थायाः ॥

(सु०) अथ संकीर्णलक्षणान्कथयति—**रागस्येति** । रागस्य रञ्जकत्वातिशयाधानं भजनमित्युच्यते । तेन संयुक्ता भजनसंबन्धिनः । ये स्थापयित्वा स्थापयित्वा निश्चलीकृत्य प्रतिक्षणं पुनः क्रियन्ते ते स्थापनासंबन्धिनः । मत्तमातङ्गस्येव या गायकप्रसिद्धा गीते गतिस्तद्युक्ता गतिसंबन्धिनः । स्नेहवान्माधुर्येण मांसलः स्थूलो ऽतिमधुर एवंविधो नादो बाहुल्येन येषु स्थायेषु ते नादसंबन्धिनः । येषु दीर्घतरः प्रयोगो गमकसंदर्भस्ते ध्वनिसंबन्धिनः । सुकुमारकान्तिसंयुक्ताश्छविसंबन्धिनः । छवेर्लक्षणं पूर्वमुक्तम् । यत्र रञ्जकत्वाधिक्यं ते रक्तिसंबन्धिनः । द्रुतसंबन्धिनः स्थाया सार्थकनामानः । यत्र स्वराणां द्रुतत्वं वेगेनोच्चारणं ते द्रुतसंबन्धिनः । ध्वनेर्भरणात्पूरणाद्घनत्वेनोच्चारणात्ते भृतिसंबन्धिनः । अंशसंबन्धिनः स्थायाँल्लक्षयितुमंशं लक्षयति—**रागान्तरस्येति** । अन्यस्मिन्रागे ऽन्यस्य

कारणांशश्च कार्यांशः सजातीयस्य चांशकः ॥ १३३ ॥
सदृशांशो विसदृशो मध्यमस्यांशको ऽपरः ।
अंशांशश्चेति यो रागे कार्येंऽशः कारणोद्भवः ॥ १३४ ॥
कारणांशस्त्वसौ रामकृतौ कोलाहलांशवत् ।
कारणे कार्यरागांशः कार्यांशे भैरवे यथा ॥ १३५ ॥
भैरव्यंशः समां जातिं गौडत्वाद्यां समाश्रिताः ।
कर्णाटाद्याः सजातीयास्तेष्वेकांशो ऽपरत्र यः ॥ १३६ ॥
सजातीयांशकः स स्यादंशः सदृशरागयोः ।
सदृशांशो यथा नट्टावराट्योः शुद्धयोर्मिथः ॥ १३७ ॥
सादृश्यशून्ययोरंशो ऽत्यन्तं विसदृशांशकः ।
वेलावल्याश्च गुर्जर्याः परस्परगतौ यथा ॥ १३८ ॥

हलादिकार्यकारणादिरागे रागान्तरस्य कोलाहलबहुल्यादिकारणकार्यादिभूतान्यरागस्यावयवः स्वरसमुदायरूप एकदेशो रक्त्यर्थमुपादीयमानोंऽश इति परिभाष्यते । न तु प्रसिद्धः स्वरविशेष उच्यते । नन्वन्यरागे काकोरंशस्य च को भेद इति चेत् ; उच्यते—प्रकृतरागे समवायवृत्त्या वर्तमानैव च्छा-

रागस्यावयवोऽशः । नन्वंशस्यान्यरागकाकोः कथं भेदः ; ब्रूमः—अन्यस्य रागस्य छायाकाकुः ; छायाया भिन्न एवावयवोऽश इति । सोऽशः सप्तप्रकारः— कारणांशः ; कार्यांशः ; सजातीयांशः ; सदृशांशः ; विसदृशांशः ; मध्यस्थांशः ; अंशांशश्चेति । एतेषां लक्षणमाह—यो राग इति । कार्यभूते रागे कारणभूतस्य रागस्य योऽशः स कारणांशः ; यथा रामकृतौ कोलाहलस्यांशः । कारणभूते रागे कार्यभूतस्य रागस्यांशः कार्यांशः ; यथा भैरवीजनके भैरवे भैरव्या अंशः । समानायां षाड्ज्यादिजातौ समुत्पन्नाः सजातीया इति भ्रान्तिं निरसितुं सजातीयांल्लक्षयति—समां जातिमिति । गौडत्ववराटीत्वादिकानां समानां जातिमाश्रिताः सजातीयास्तेष्वन्यस्मिन्नन्यस्य योऽंशः स सजातीयांशः । नट्टावराट्योरिव सदृ-

मध्यस्थरागौ सादृश्यवैसादृश्यविवर्जितौ ।
मध्यस्थांशस्तयोरंशो नट्टादेशाख्ययोरिव ॥ १३९ ॥
अंशेंऽशान्तरसंचारादंशांश इति कीर्तितः ।
येष्वंशो दृश्यते स्थायास्तेंऽशस्य परिकीर्तिताः ॥ १४० ॥
मनसा तद्गतेनैव ये ग्राह्यास्ते ऽवधानजाः ।
आयासेन विना यत्र स्थाने स्यात्प्रचुरो ध्वनिः ॥ १४१ ॥
स्वस्थानं तदपस्थानं त्वायासेन तदुद्गतेः ।
अपस्थानस्य ते स्थाया ये ऽपस्थानसमुद्भवाः ॥ १४२ ॥
निकृतेः करुणायाश्च स्थायास्त्वन्वर्थनामकाः ।
स्थाया नानाविधां भङ्गीं भजन्तो विविधत्वजाः ॥ १४३ ॥
गात्रस्य गात्रे निरताः कृत्वा तीव्रतरं ध्वनिम् ।
येषूपशान्तिः क्रियते भवन्त्युपशमस्य ते ॥ १४४ ॥

यात्यन्तसादृश्याद्रागान्तराश्रया सती या प्रतीयते सान्यरागकाकुः । अंशस्तु प्रकृतरागेऽविद्यमान एव शोभातिशयाय याचितकमण्डनन्यायेन रागान्तरादुपादाय संयोगवृत्त्यात्र संबध्यत इति भेदो द्रष्टव्यः ॥ -१०४—१४४ ॥

शरागयोर्योऽशः स सदृशांशः । अत्यन्तविसदृशयो रागयोर्योंऽशो यः परस्मिन्दृश्यते स विसदृशांशः । वेलावलीगुर्जर्योरिव सादृश्यवैसादृश्यविवर्जनेन योऽंशः स मध्यस्थांशः । यो लक्षितेष्वंशेष्वंशान्तरस्य संचारः प्रवेशः सोऽशांशः । एवंविधो योऽंशो येषु दृश्यते तेऽंशसंबन्धिनः स्थायाः । अवधानसंबन्धिनं स्थायं लक्षयति—मनसेति । तद्गतेन तत्प्रवणेनैव मनसा ग्राह्य उद्ग्राह्यो गेय इति यावत् । चेतसो वैयग्र्ये स्थायो गातुं न शक्यते सो ऽवधानजः । आयासेनेति । आयासाभावे ऽपि यत्र स्थाने ध्वनिर्विपुलो भवति ; तत्स्वस्थानमित्युच्यते । आयासेन तु यत्र तस्य प्रचुरध्वनेर्गतिः प्राप्तिः । तदपस्थानमिति । तत्र जाता स्थाया अपस्थानसंबन्धिनः । निकृतेः करुणायाश्च स्थायाः

काण्डारणा प्रसिद्धैव तस्याः स्थायास्तदुद्भवाः ।
सरलः कोमलो रक्तः क्रमान्नीतोऽतिसूक्ष्मताम् ॥ १४५ ॥
स्वरस्थायेषु ते स्थायाः प्रोक्ता निर्जवनान्विताः ।
गाढः शैथिल्यनिर्मुक्तः स एव मृदुतान्वितः ॥ १४६ ॥
भवेल्ललितगाढस्तु ललितस्तु विलासवान् ।
मार्दवाघूर्णितः प्रोक्तो लुलितः स्यात्समः पुनः ॥ १४७ ॥
हीनो वेगविलम्बाभ्यां यथार्थः कोमलो मतः ।
प्रसृतः प्रसृतोपेतः स्निग्धो रूक्षत्ववर्जितः ॥ १४८ ॥
उज्ज्वलो गदितश्चोक्ष उचितस्तु यथार्थकः ।
सुदेशिको विदग्धानां वल्लभो ऽपेक्षितस्तु सः ॥ १४९ ॥

(क०) काण्डारणा प्रसिद्धैवेति । काण्डेषु मन्द्रमध्यतारेष्वा-समन्ताद्रणतीति व्युत्पत्त्या प्रसिद्धेत्यर्थः । सुगममन्यत् ॥ १४५—१८८ ॥

सार्थकनामानः, येषु स्थायेषु निकृतिरन्यूनाधिकत्वं ते निकृतिसंबन्धिनः । ये करुणामुत्पादयन्ति ते करुणासंबन्धिनः । करुणानिकृत्योर्लक्षणमुक्तं पार्श्वदेवेन—

"करुणा रागयोगेन चिन्तादीनतयाथ वा ।
करुणाकाकुसंयुक्ता स्थायास्ते करुणाभिधाः ॥
स्थायं विविधमादाय बलात्संस्थाप्यते पुनः ।
अन्यूनाधिकता तज्ज्ञैर्निकृतिः परिगीयते ॥" इति ॥

अनेकभङ्गियुक्ताः स्थायाः विचित्रत्वसंबन्धिनः । ये तु गात्रविशेषे नियताः प्रतिगात्रमन्यथोत्पद्यन्ते ते गात्रसंबन्धिनः । ननु क्षेत्रकाकुसंबन्धिभ्य एतेषां को भेदः ; उच्यते—क्षेत्रकाकुः प्रतिदेहं छायामात्रम् ; गात्रजेषु तु स्थायस्वरूपमेव प्रतिदेहं भिद्यत इति । तीव्रतमतितारं ध्वनिं कृत्वा येषूपशान्तिः शीघ्रं मन्द्रोपसर्पणं येषु स्थायेषु ते उपशमसंबन्धिनः । काण्डारणा लोके प्रसिद्धा ; तदुद्भवा स्थाया काण्डारणासंबन्धिनः । लोके स्तम्भादिषु पद्माद्याकारोत्किरणं काण्डारणेत्यु-

स्थायस्थायेन पूर्वेण पूर्त्यर्थं यो ऽभिकाङ्क्षितः ।
वलौ वहेर्वहन्यां च यः स्निग्धमधुरो महान् ॥ १५० ॥
मन्द्रे ध्वनिः सघोषः स्यात्तद्युक्ता घोषजा मताः ।
गम्भीरमधुरध्वाना मन्द्रे ये स्युः स्वरस्य ते ॥ १५१ ॥
वहन्त इव कम्पन्ते स्वरा येषु वहस्य ते ।
अक्षराडम्बरो येषु मुख्यास्ते स्युस्तदन्विताः ॥ १५२ ॥
वेगेन प्रेरितैरूर्ध्वं स्वरैरुल्लासितो मतः ।
यत्र गङ्गातरङ्गन्ति स्वराः स स्यात्तरङ्गितः ॥ १५३ ॥
परितो ऽर्धभृते कुम्भे जलं डोलायते यथा ।
गीते तथाविधः स्थायः प्रोक्तस्तज्ज्ञैः सलम्बितः ॥ १५४ ॥

च्यते । सरलो ऽवक्रः, कोमलः सुकुमारः, रक्तो रागवान् क्रमेण सूक्ष्मत्वं प्रापितः स्वरो येषु ते निर्जवनसंबन्धिनः । शैथिल्येन हीनो यः प्रचुरस्वरः स्थायः स गाढ इत्युच्यते । स एव गाढः किंचिन्मार्दवसंयुक्तो ललितगाढ इत्युच्यते । विलासश्चातुर्यं यस्मिन्दृश्यते स ललितः । मार्दवाद्घूर्णितो यो डोलायुक्तः स लुलितः । यस्तु वेगविलम्बरहितो मध्यमानेन गीयते स समः । कोमलः सुकुमारः प्रसरेण विस्तरेणोपेतो युक्तः प्रसृतः ; स्नेहवान् स्निग्धः ; उज्ज्वलो दीप्तिमांश्चोक्ष इत्युच्यते । औचित्यं यत्र विद्यते स उचितः । यस्तु विदग्धानां सहृदयानां वल्लभः प्रियः स सुदेशिकः । पूर्वेण स्थायेन यः स्वपूर्त्यर्थमाकाङ्क्षते सो ऽपेक्षितः । वलौ वलिसंज्ञके गमके वहेः स्वरकम्पे वहन्यां पूर्वोक्तायां च यः स्नेहवान् मधुरः स्थूलो मन्द्रस्थानीयो ध्वनिः स घोष इत्युच्यते ; तद्युक्ताः स्थायाः घोषसंबन्धिनः । ये मन्द्रस्थाने गम्भीरा मधुरध्वनयस्ते परस्य स्वरस्य संबन्धिनो ज्ञेयाः ॥ १२७—१५१ ॥ इति त्रयस्त्रिंशत्संकीर्णाः स्थायाः ॥

अथासंकीर्णान्विंशतिं स्थायाँल्लक्षयति—वहन्त इति । येषु स्थायेषु स्वराः कम्पन्ते वहन्त इव यथा भूरिभाराक्रान्ताः कम्पन्ते तद्वत्ते वहसंबन्धिनः स्थायाः । येषु स्थायेष्वक्षराणामाडम्बरः प्रौढिस्ते ऽक्षरसंबन्धिनः । यत्र वेगेनोर्ध्वं प्रेषितैः

अवस्खलति यो मन्द्रादवरोहेण वेगतः ।
सो ऽवस्खलित इत्युक्तस्त्रोटितस्तु स्वरे क्वचित् ॥ १५५ ॥
चिरं स्थित्वाभिवक्तारं स्पृष्ट्वा प्रत्यागतो भवेत् ।
घनस्वरो ऽवरोहे स्यात्संप्रविष्टस्तथाविधः ॥ १५६ ॥
आरोहिण्युत्प्रविष्टः स्यादन्वर्थाः स्युः परे त्रयः ।
प्रतिग्राहोल्लासितः स्यादसौ यः प्रतिगृह्यते ॥ १५७ ॥
उत्क्षिप्योत्क्षिप्य निपतत्केलिकन्दुकसुन्दरः ।
द्रुतपूर्वो विलम्बान्तः स्यादलम्बविलम्बकः ॥ १५८ ॥
स्यात्त्रोटितप्रतीष्टो ऽसौ यत्र स्यात्तारमन्द्रयोः ।
प्रथमं त्रोटयित्वैकमपरस्य प्रतिग्रहः ॥ १५९ ॥
प्रसृताकुञ्चितः स्थायः प्रसार्याकुञ्चितध्वनिः ।
स्थायिवर्णस्थितिः कम्पः स्थिर इत्यभिधीयते ॥ १६० ॥

स्वरैर्युक्तः स उल्लासितः । यत्र स्थाये गङ्गातरङ्गवदाचरन्ति स्वराः स तरङ्गितः । आचारार्थे क्विप् । अर्धपूर्णे कलशे यथोदकं डोलायते तथाविधः स्थायः सलम्बित इत्युच्यते । क्वचित्प्रलम्बित इति पाठः । यस्त्ववरोहन्मन्द्रादवस्खलति शीघ्रं मन्द्रं परित्यजति सोऽवस्खलित इत्युच्यते । कस्मिंश्चित्स्वरे चिरं स्थित्वा अभिवक्तृ-कृत्तारं स्पृष्ट्वा पुनरपि तत्स्वरं प्रत्यागतस्त्रोटित इत्युच्यते । अवरोहे घनाः निबिडाः स्वरा यो यस्मिन्स संप्रविष्टः ; आरोहे तथाविधो घनस्वरः ; अन्ये त्रयः ; निः-सारणभ्रामितदीर्घकम्पिता अन्वर्थनाम्नैव लक्षणप्रतीतिस्तेषां त्रयाणामित्यर्थः । यत्र स्वराणां निःसरणमिव भ्रमणं दीर्घकम्पनं च ते तथाविधा इत्यर्थः । यः क्रीडा-कन्दुकवन्निपतन्नुत्क्षिप्योत्क्षिप्य गृह्यते स प्रतिग्रहोल्लासितः । यस्तु पूर्वं द्रुतमानेन पश्चाद्विलम्बितमानेन गीयते सो ऽविलम्बविलम्बकः । तारमन्द्रयोरुभयोः स्वर-योर्मध्ये प्रथमं त्रोटयित्वा निरस्यापरस्य द्वितीयस्य प्रतिग्रहणं स्वीकारो गानमिति यावत् ; स त्रोटितप्रतीष्टः । यस्य ध्वनिः प्रसार्य विस्तार्य आकुञ्च्यते संक्षिप्यते

एकैकस्मिन्स्वरे स्थित्वा स्थित्वा वाथ द्वयोर्द्वयोः ।
त्रिषु त्रिष्वथ वा स्थायो रचितः स्थायुको मतः ॥ १६१ ॥
ऊर्ध्वः प्रसारितः क्षिप्तः सूक्ष्मान्तोऽन्ते ऽल्पतां गतः ।
शब्दः प्रकाशते येषु धृतिभूत्यादिवर्जितः ॥ १६२ ॥
स्वभावादेव शब्दस्य प्रकृतिस्थस्य ते मताः ।
येषु सूक्ष्मीकृताः शब्दास्ते कलायाः प्रकीर्तिताः ॥ १६३ ॥
भृशं प्राणप्रतिग्राह्या ये स्युराक्रमणस्य ते ।
ते स्थाया घटनाया ये शिल्पिना घटिता इव ॥ १६४ ॥
सुखदास्तु सुखस्य स्युश्चालिर्मेकेति कीर्तिताः ।
स्थायास्तदन्विताश्चालेरंशो जीवस्वरो मतः ॥ १६५ ॥
तत्प्राधान्येन ये गीताः स्थाया जीवस्वरस्य ते ।
वेदध्वनिनिभध्वानाः स्थाया वेदध्वनेर्मताः ॥ १६६ ॥
अन्तःसारो घनत्वस्य यथार्थः शिथिलो मतः ।
दुष्करो ऽवघटः प्रोक्तः प्लुतो ऽत्यन्तविलम्बितः ॥ १६७ ॥

स प्रसृताकुञ्चितः । स्थायिवर्णे स्थितानां स्वराणां कम्पो यस्मिन्स स्थिरः । एकैकस्मिन्स्वरे द्वयोर्द्वयोर्वा स्वरयोस्त्रिषु वा स्वरेषु स्थित्वा क्षणं स्थिरीभूय यो विरच्यते स्थायः स स्थायुक इत्युच्यते । ऊर्ध्वं तारस्थाने प्रसारितो विसारितः क्षिप्त इत्युच्यते । पूर्वं स्थूलो ऽन्ते ऽल्पतां नीतः स सूक्ष्मान्तः ॥ १९२—१६१- ॥ इत्यसंकीर्णा विंशतिः स्थायाः ॥

त्रयस्त्रिंशतं संकीर्णांल्लक्षयति—शब्द इति । धृतिभूत्यादिवर्जित आकुञ्चनपूरणादिहीनः शब्दः स्वाभाविको येषु स्थायेषु प्रकाशते ते प्रकृतिस्थाः शब्दसंबन्धिनः । येषु स्थायेषु शब्दः सूक्ष्मो ऽल्पः क्रियते ते कलासंबन्धिनः । भृशमतिशयेन प्राणेन बलेन ये प्रतिग्रहीतुं शक्यन्ते त आक्रमणसबन्धिनः । ये शिल्पिना घटिताः स्तम्भा इव प्रतिभान्ति ते घटनासंबन्धिनः । ये सुखदास्ते

रागेणेष्टः स्वपूर्त्यर्थं रागेष्ट इति कीर्तितः ।
स स्यादपस्वराभासो भात्यपस्वरवत्तु यः ॥ १६८ ॥
स्तब्धस्थायस्तु बद्धः स्याद्बहुत्वं मधुरध्वनेः ।
यस्मिन्कलरवस्यासौ छान्दसोऽचतुरप्रियः ॥ १६९ ॥
सुकराभास इत्युक्तो दुष्करः सुकरोपमः ।
घण्टानादवदायातस्तारान्मन्द्रं तु संहितः ॥ १७० ॥
लघुर्गुरुत्वरहितो ध्रुवकाभोगयोस्तु यः ।
अन्तरे सोऽन्तरो वक्रो यथार्थः सुकरस्तु यः ॥ १७१ ॥
तारे दीप्तप्रसन्नो ऽसौ सुकरः कोमलध्वनिः ।
प्रसन्नमृदुरित्युक्तो गुरुरन्वर्थनामकः ॥ १७२ ॥
ह्रस्वः स्तोकः परौ द्वौ तु स्यातामन्वर्थनामकौ ।
शब्दशारीरगुणतः सुकरः सुस्वरोऽथवा ॥ १७३ ॥

सुखसंबन्धिनः। चालिर्भङ्गिविशेषेण स्वराणां चालनं सा लोके जकेति कथ्यते; तदन्विता स्थायाश्चालिसंबन्धिनः। अंशस्वरो जीवस्वर इत्युच्यते; तं मुख्यं कृत्वा ये स्थाया गीयन्ते ते जीवस्वरसंबन्धिनः। येषु स्थायेषु वेदध्वनिरिव प्रतिभाति ते वेदध्वनिसंबन्धिनः। ये मध्ये भृता इव घनाः प्रतिभान्ति ते घनत्वसंबन्धिनः। शिथिलो घनत्वप्रतियोग्यर्थः; दुःखेन कर्तुं शक्यते यः सोऽवघटः। यस्त्वत्यन्तविलम्बेन गीयते स प्लुतः। यस्तु रागेण स्वपूरणायाकाङ्क्षते; येन विना रागो ऽपरिपूर्ण इव प्रतिभाति स रागेष्टः। यस्तु सुस्वरो ऽप्यपस्वरवदवभासते सो ऽपस्वरः। यस्तु निगलित इव स्तब्धस्तिष्ठति स्थायः स बद्धः। यत्र मधुरध्वनेरनल्पत्वं स कलरवसंबन्धी। यस्तु छान्दसानामचतुराणामविदग्धानां प्रियः स च्छान्दसः। यस्तु दुष्करो ऽपि सुकरः सुखगेय इत्यवभासते स सुकराभासः। यस्तु घण्टानादवदनुरणनयुक्तस्तथा तारस्थानान्मन्द्रस्थानं प्रयाति स संहित इत्युच्यते। यस्तु गुरुत्वेन हीनो लाघवेन गीयते स लघुरित्युच्यते। यस्तु ध्रुवकाभोगयोः पदयोरन्तरा गीयते सो ऽन्तरः।

यः कस्यचिन्न सर्वेषां सोऽसाधारण उच्यते ।
सदृशो यस्तु सर्वेषामसौ साधारणः स्मृतः ॥ १७४ ॥
न वाञ्छति वहन्यादि यः स्वनिर्वाहहेतवे ।
उच्यते स निराधारः सुकरो दुष्करोपमः ॥ १७५ ॥
दुष्कराभास इत्युक्तो मिश्रणान्मिश्रको मतः ।
आनन्त्यान्नैव शक्यन्ते भेदा मिश्रस्य लक्षितुम् ॥ १७६ ॥
दिक्प्रदर्शनमात्रार्थमुच्यन्ते तेषु केचन ।
यो यस्मिन्बहुलः स्थायः स तेन व्यपदिश्यते ॥ १७७ ॥
साम्ये तु मिश्रनामैव स त्विदानीं प्रपञ्च्यते ।
तिरिपान्दोलितो लीनकम्पितः कम्पिताहतः ॥ १७८ ॥
तिरिपस्फुरितो लीनस्फुरितः स्फुरिताहतः ।
लीनकम्पितलीनश्च त्रिभिन्नकुरुल्लाहतः ॥ १८९ ॥
प्लावितोल्लासितवलिर्वलिहुम्फितमुद्रितः ।
नामितान्दोलितवलिर्वलिनामितकम्पितः ॥ १८० ॥

यस्तु तारस्थाने सकलो ऽन्यूनः संपूर्णः प्रतिभाति स दीप्तप्रसन्नः । यस्तु सुखेन कर्तुं शक्यते सुकुमारध्वनिश्च स प्रसन्नमृदुः । गुरुलाघवहीनो यथार्थः । यस्तु खर्व इव प्रतिभाति स ह्रस्वः । परौ शिथिलगाढदीप्तौ सार्थकनामानौ । यस्तु कस्यचिदेव पुरुषस्य शब्दगुणेन शारीरगुणेन वा सुकरः; सुखेन कर्तुं शक्यः स सुस्वरः; अपस्वरहीनो वा; न तु सर्वेषां पुरुषाणां सो ऽसाधारणः । यस्य वहन्यादिर्वहनीवलिहुम्फितादिस्वरनिर्वाहहेतवे ऽन्यदङ्गकम्पितादि न वाञ्छति स निराधारः । एतेषां युक्तानां स्थायानां किंचिल्लक्षणमिश्रणान्मिश्रः ॥ १६३—१७५- ॥ इति त्रयस्त्रिंशत्संकीर्णाः स्थायाः ॥

कियतो मिश्रभेदान्कथयितुमाह—आनन्त्यादिति । मिश्रस्य स्थायस्य भेदा सामस्त्येन लक्षयितुमशक्याः; तस्मादभ्यूहनप्रकारार्थं कियन्तश्चित्कथ्यन्त

आन्दोलितप्लावितकसमुल्लासितनामितः ।
तिरिपान्दोलितवलित्रिभिन्नकुरुल्लोऽपरः ॥ १८१ ॥
त्रिभिन्नलीनस्फुरितप्लावितान्दोलितः परः ।
वहनीढालयोर्ढालवहन्योः शब्दढालयोः ॥ १८२ ॥
वहनीयन्त्रयोश्छायायन्त्रयोः शब्दयन्त्रयोः ।
वहनीच्छाययोर्यन्त्रवाद्यशब्दभवः परः ॥ १८३ ॥
तीक्ष्णप्रेरितकस्तीक्ष्णप्रेरितः स्वरलङ्घितः ।
ढालशब्दोत्थयन्त्रोत्थवाद्यशब्दभवः परः ॥ १८४ ॥
ढालच्छायायन्त्रवाद्यशब्दशब्दभवो ऽपरः ।
प्रलम्बितावस्खलितत्रोटितोल्लासितः परः ॥ १८५ ॥
संप्रविष्टोत्प्रविष्टश्च संप्रविष्टतरङ्गितः ।
प्रतिग्राह्योल्लासितश्चोत्क्षिप्तोऽलम्बविलम्बकः ॥ १८६ ॥
स्यात्त्रोटितप्रतीष्टोत्प्रविष्टनिःसरणः परः ।
दीर्घकम्पितसूक्ष्मान्तभ्रामितस्थायुको ऽन्यकः ॥ १८७ ॥
वहाक्षराडम्बरजः प्रसृताकुञ्चितस्थिरः ।
भ्रामितक्षिप्तसूक्ष्मान्ततरङ्गितविलम्बितः ॥ १८८ ॥
एते षट्त्रिंशदन्ये ऽपि विज्ञातव्या दिशानया ।

इत्यर्थः । ननु मिश्रभेदानां नामानि किमिति न प्रदर्श्यन्ते ; अत आह—यो यस्मिन्निति । यस्मिन्मिश्रे स्थाये यः पूर्वोक्तेषु स्थायेषु बाहुल्येन दृश्यते स तन्नामा मिश्रस्थायः । यथा शब्दमिश्रो ढालमिश्र इति । यत्र तु लक्षणसाम्यं तदा मिश्रनामानः स्थायाः । तानेव मिश्रनाम्नः स्थायान्कतिचित्कथयति—तिरिपान्दोलित इत्यादिना । अत्र द्वयोर्लक्षणसाम्ये द्वियोगजाः; त्रयाणां लक्षणसाम्ये त्रियोगजाः । चतुर्णां लक्षणसाम्ये चतुर्योगजाः । एवं षट्त्रिंशद्दिक्प्रदर्शनार्थमुक्ताः । अनया दिशा अन्येऽप्यूहनीयाः ॥ -१७६—१८८- ॥ इति स्थायवागलक्षणम् ॥

रागालपनमालप्तिः प्रकटीकरणं मतम् ॥ १८९ ॥

(क०) अथ सप्रभेदामालप्तिं लक्षयिष्यन्प्रथमं तावदालप्तिशब्दं व्युत्पादयितुमाह—**रागालपनमालप्ति**रिति । अत्र यदालपनं सा आलप्तिरित्यनेनालप्तिशब्दोऽप्यालपनशब्दवद्भावसाधनत्वेन व्युत्पन्न इति दर्शितं भवति । नन्वालापशब्दस्यापि भावसाधनत्वाविशेषात् 'स्याद्रागालाप आलप्तिः' इति व्युत्पादनं कस्मान्न क्रियत इति चेत्; उच्यते—घञ्क्तिन्प्रत्ययोर्विलक्षणार्थत्वादिति । तथा हि घञस्तावदाविर्भावो ऽर्थः । क्तिनस्तु तिरोभावोऽर्थः । आविर्भावतिरोभावयोरत्यन्तवैलक्षण्यमेव । ल्युटस्तु तदुभयमध्यस्थस्थित्यर्थत्वात्तदन्ते घञ्क्तिनन्तयोर्व्युत्पादनमविरुद्धम् । ताभ्यां तु परस्परव्युत्पादनं विरुद्धमेव । अत एव भावावस्थाभेदाद्धञाद्यन्तानां लिङ्गभेदोऽप्युपपन्न एव । यथा घञर्थ आविर्भावः सत्त्वपरिणामरूपो मूर्तिधर्मः पुंस्त्वेन दृष्ट इति घञन्तस्य पुंलिङ्गता; क्तिनर्थस्तिरोभावो रजःपरिणामरूपो मूर्तिधर्मः स्त्रीत्वेन दृष्ट इति क्तिन्नन्तस्य स्त्रीलिङ्गता; ल्युडर्थस्याविर्भावतिरोभावोभयान्तरालस्य तमःपरिणामरूपस्य मूर्तिधर्मस्य नपुंसकत्वेन दर्शनाल्ल्युडन्तस्य नपुंसकलिङ्गतेति । तदेवं भावसाधनानां घञाद्यन्तानामालापादिशब्दानां सामान्येन भावार्थत्वेऽपि तदवस्थाविशेषभूताविर्भावतिरोभावस्थितिपरतया तेषां घञ्क्तिंल्ल्युडन्तानां क्रमेण पुंस्त्रीनपुंसकलिङ्गता द्रष्टव्या । भावो नाम साध्यरूपस्य धात्वर्थस्य सिद्धत्वाकारः । तदवस्थाविशेषा आविर्भावादयः । तथाचोक्तं **हरदत्तमिश्रैः**—

"आख्यातशब्दे भागाभ्यां साध्यसाधनवर्जिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।

सत्त्वभावस्तु यस्तु स्यात्स घत्रादिनिबन्धनः ॥
न विना लिङ्गसंख्याभ्यां सत्त्वभूतोऽर्थ उच्यते ।
इत्यतन्त्रमुपादानं तयोर्न तु विवक्षितम् ॥"

इत्युपक्रम्य—

"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥
आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः ।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः ॥" इति ॥

"आविर्भाव उपचयः पुंस्त्वम्; तिरोभावो ऽपचयः स्त्रीत्वम्; अन्तरालावस्थास्थितिर्नपुंसकत्वमित्यर्थः । कस्य पुनराविर्भावादिकं लिङ्गम्? सत्त्वरजस्तमसां गुणानां तत्परिणामरूपाणां च तदात्मकानां शब्दस्पर्शरूपरसगन्धानाम् । शब्दादितत्त्वसंघातरूपाश्च सर्वा मूर्तयः क्षणपरिणामस्वभावाश्च सत्त्वादयो गुणा न स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठन्ते । एवं शब्दादय आकाशादयो घटादयश्च । उक्तं च—

"सर्वमूर्त्यात्मभूतानां शब्दादीनां गुणे गुणे ।
त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः ॥
कथितोदकवच्चैषामनवस्थितवृत्तिता ।
अजस्रं सर्वभावानां भाष्य एवोपवर्णिता ॥" इति ।

तथा—

"रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणम् ।
काचित्प्रलीयते काचित्कथंचिदभिवर्धते ॥
प्रवृत्तिमन्तः सर्वे ऽर्थास्तिसृभिश्च प्रवृत्तिभिः ।
सततं न वियुज्यन्ते वाचश्चैवात्र संभवः ॥" इति च ।

टावायन्तशब्दा एवैतामवस्थां गोचरयन्तीत्यर्थः । पुरुषो यद्यप्यपरिणामी; तथापि—

"अचेतनेषु चैतन्यं संक्रान्तमिव दृश्यते ।
प्रतिबिम्बकधर्मेण यत्तच्छब्दनिबन्धनम् ॥"

ततश्च—

"यश्चाप्रवृत्तिधर्मास्त्यस्थितिरूपेण गृह्यते ।
अनुयातीव सोऽन्येषां प्रवृत्तिर्विष्वगाश्रया ॥
सामान्यमपि गोत्वादि व्यक्तेरव्यतिरेकतः ।
प्रवृत्तिधर्मतद्द्वारा शशशृङ्गादिवाकुलम् ॥
तस्मादुक्तपदार्थस्य सद्भावाल्लिङ्गयोगिता ।
प्रवृत्तेरपि विद्यन्ते तिस्रो ह्येताः प्रवृत्तयः ॥
पुंनपुंसकता स्त्रीत्वं तेन स्यादन्यलिङ्गता ।" इति ॥

तदेवं सर्वपदार्थव्यापित्वादुपचयापचयान्तरालावस्थात्रीणि लिङ्गानि । एवं च नक्षत्रम्, तारका, तिष्यः; डिम्भः कुमारी; अर्थो वस्त्वित्येकस्याप्यर्थस्य नानालिङ्गयोग उपपद्यते । आविर्भावादित्रयस्यापि गुणभेदेन तस्मिन्नेवार्थे सर्वदा संभवात् । न चैवं तद्वृत्तेः सर्वस्यैव शब्दस्य त्रिलिङ्गताप्रसङ्गः । न ह्यस्ति नियमः; यः शब्दो यत्रार्थे पर्यवस्यति तत्र विद्यमानः सर्व एवाकारस्तेन शब्देनाभिधातव्य इति । किं तु य आकारोऽभिधीयते तेन सता भवितव्यमित्येतावत् । तद्यथा—तक्षा, युवा, कृष्णः, कामुक इति तक्षादिशब्दानामेकार्थपर्यवसायिनामपि व्यवस्थित एवाकारो वाच्यः । तथा लिङ्गेष्वपि द्रष्टव्यम् । उक्तं च—

"संनिधाने पदार्थानां किंचिदेव प्रवर्तकम् ।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥" इति ॥

उपचीयते कुमारीत्यत्रापि कुमारीशब्दः स्वमहिम्ना कस्यचिद्धर्मस्योपचयमेवाह; शब्दान्तरप्रयोगात्तु धर्मान्तरस्यापचयः प्रतीयते। एवं क्षीयते वृक्ष इत्यत्रापचयः प्रतीयते। तदेवं सर्वमनाकुलमिदं दर्शनम्। तत्राचेतनेषु सर्वत्रोपदेशादेवाभिव्यक्तिः। चेतनेष्वपि स्वयमव्यञ्जितस्य लिङ्गस्योपदेशादेवाभिव्यक्तिः। उपदेशः पुनर्लिङ्गानुशासनादिषु" । इति ॥*

नन्वेवमवस्थाभेदेनार्थभेदसिद्धेः कथं रागालपनालप्तिशब्दयोरेकार्थत्वेनोपन्यास उपपद्यत इति चेत्; उच्यते—स्थित्यवस्थाभावार्थवदालपनशब्दस्य तिरोभावावस्थाभावार्थवदालप्तिशब्दस्य चार्थभेदे सत्यपि स्थित्यवस्थाया आविर्भावतिरोभावावस्थयोरन्तरालत्वेनोभयसाधारणतया काकाक्षिन्यायेन यदालपनशब्दस्य तिरोभावार्थप्रधानत्वं विवक्षितं तदालप्तिशब्देन समानार्थत्वम्। यदा तु तस्यैवाविर्भावार्थप्रधानत्वं विवक्षितं तदालापशब्देन समानार्थत्वमिति। अत एवालपनमालप्तिरिति वा; आलपनमालाप इति वा व्युत्पादयितुं शक्यते नान्यथेति गतमेतत्। फलसाम्याभिप्रायेण प्रकारान्तरमपि क्रोडीकर्तुमाह—**प्रकटीकरणं मतमिति**। अत्र प्रकृतत्वाद्रागस्य प्रकटीकरणमिति गम्यते। रागप्रकटीकरणमप्यालप्तित्वेन संमतमित्यर्थः। प्रकटीकरणमित्यत्र प्रकटीति च्वेरभूततद्भावार्थत्वात्किंचित्प्रतीयमानार्थत्वं विवक्षितम्। आलपनमित्यत्रापि तिरोभावस्य प्रकटार्थावरणरूपत्वात्तत्रापि किंचित्प्रतीयमानार्थत्वं विवक्षितम्। तेनोभयत्रापि फलभूतं रागस्य किंचित्प्रतीयमानत्वमेवालप्तिशब्दप्रवृत्तौ निमित्तमित्यवगन्तव्यम्। तथा ह्यालप्तौ प्रकारद्वयं च पर्यायेण संभवति। यदा तावदाविर्भूतस्य रागस्य विचित्रवर्णालंकारगमकस्थायप्रयोगभङ्गिभेदेन तिरोभावः क्रियते; तदालप्तिशब्दस्यालपनशब्दसमानार्थता। यदा त्वत्र तस्य रागस्य तादृशेनैव प्रयोगभेदेन तद्भावः संपद्यते; तदा प्रकटीकरणसमानार्थता चेति रहस्यमेतत्। एवमालप्तिशब्दार्थं प्रदर्श्य तद्भेदान्प्र-

* Padamañjarī on Kāśikā, Cha. IV. 1. 3.

सा द्विधा गदिता रागरूपकाभ्यां विशेषणात् ।
रागालप्तिस्तु सा या स्यादनपेक्ष्यैव रूपकम् ॥ १९० ॥
स्वस्थानैः सा चतुर्भिः स्यादिति गीतविदो विदुः ।
यत्रोपवेश्यते रागः स्वरे स्थायी स कथ्यते ॥ १९१ ॥
ततश्चतुर्थो द्व्यर्धः स्यात्स्वरे तस्मादधस्तने ।
चालनं मुखचालः स्यात्स्वस्थानं प्रथमं च तत् ॥ १९२ ॥

दर्शयति—**सा द्विधेत्यादिना** । **रागरूपकाभ्यां विशेषणादिति** । रागविशेषणाद्रागालप्तिः ; रूपकविशेषणाद्रूपकालप्तिरित्यर्थः ॥ **रागालप्तिस्त्विति**। तुशब्दो रूपकालप्तेस्तस्या वैलक्षण्यद्योतनार्थः । **रूपकमनपेक्ष्यैवेति** । रूपकं प्रबन्धः ; 'प्रबन्धो वस्तु रूपकम्' इति वक्ष्यमाणत्वात् । तत्र मात्रयाप्यनाश्रितेत्यर्थः । **स्वस्थानैरिति** । स्वस्थानैः ; रागालपनविश्रान्तिप्रदेशैश्चतुर्भिर्मुखचालादिभिर्वक्ष्यमाणैः ; स्यादुपलक्षिता स्यादित्यर्थः । स्वस्थानैरितीत्थंभूतलक्षणे तृतीया ॥ **यत्रेत्यादि** । यत्र यस्मिंस्तत्तद्रागांशभूते षड्जादिष्वन्यतमे स्वरे राग उपवेश्यते स्थाप्यते स स्वरो रागस्थितिहेतुत्वात्स्थायीति कथ्यते । ततः स्थायिनः स्वराच्चतुर्थ आरोहक्रमेण सत्यपि लोप्यस्वरे तेन सह गणनायां चतुर्थः स्वरो द्व्यर्धः स्यात् । द्विगुणस्वरापेक्षयार्धत्वाद्व्यर्धसंज्ञको भवति । **तस्मादधस्तन** इति । तस्माद्व्यर्धस्वरात् । अधस्तने स्वर इति तदधोऽधःस्थानामप्युपलक्षणम् । तेन स्थायिनो ऽप्यधस्तना गृह्यन्ते । अन्यथैकस्मिन्नेव स्वरे रागप्रतीतेरभावात् । तेषु चालनं तत्तद्रागोचितस्फुरितकम्पितादिगमकयुक्तत्वेनोच्चारणं वादनं वा मुखचालः स्यात् । मुखचाल इत्यन्वर्थसंज्ञा । तदेव प्रथमं स्वस्थानम् । अयमर्थः—स्थायिनमारभ्य द्व्यर्धस्वरमर्यादावधिं कृत्वा तदधस्तनान्यथोचितं चालयित्वा स्थायिनि न्यासे

द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम् ।
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ॥ १९३ ॥
द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ।
अर्धस्थिते चालयित्वा न्यसनं तु तृतीयकम् ॥ १९४ ॥
द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ।
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥ १९५ ॥
स्तोकस्तोकैस्ततः स्थायैः प्रसन्नैर्बहुभङ्गिभिः ।
जीवस्वरन्यासमुख्यै रागस्य स्थापना भवेत् ॥ १९६ ॥

कृते प्रथमं स्वस्थानमिति । **द्व्यर्धस्वरे चालयित्वेति** । पूर्वोक्तैः स्वरैः सह द्व्यर्धस्वरमपि चालयित्वा स्थायिन्यासे सति द्वितीयं स्वस्थानमित्यर्थः ॥ **अर्धस्थिते चालयित्वेति** । अयमर्थः—द्विगुणं परित्यज्य तदधोऽधःस्थितेषु चालयित्वा स्थायिन्यासे सति तृतीयं स्वस्थानमिति । **द्विगुणे चालयित्वेति** । द्विगुण इति तदुत्तरेषामप्युपलक्षणम् । तेषु चालयित्वा स्थायिन्यासाच्चतुर्थं स्वस्थानं भवति ॥ **स्तोकस्तोकैरित्यादि** । जीवस्वरोऽंशस्वरः । उक्तस्वस्थानचतुष्टयप्रयुक्तायामालप्तावुक्तलक्षणैः स्वल्पै रागावयवैर्विस्तार्यमाणायामापाततोऽभिव्यक्तस्य रागस्य रागान्तरसाधारणस्थायादिप्रयोगात्स्वरूपतिरोभावे सति किंचित्प्रतीयमानता भवेदित्यभिप्रायः । यथा लोके सभां प्रत्यागच्छतो देवदत्तस्य स्वरूपेणाभिव्यक्तस्य ततः सभां प्रविश्योपविष्टस्य तस्य स्वसदृशरूपवेषभाषादिसांकर्यात्स्वरूपतिरोभावे सति यथा तस्य किंचित्प्रतीयमानत्वम् । यथा वा पृथगानीय भिन्नवर्णेषु मणिषु प्रोतस्य मुक्तामणेर्मण्यन्तरच्छायोपरागात्स्वरूपतिरोभावे सति यथा तस्य किंचित्प्रतीयमानत्वं तद्वदिति ॥ -१८०—१९६ ॥ इति रागालप्तिः ॥

**रूपकस्थेन रागेण तालेन च विधीयते ।**
**या प्रोक्ता रूपकालप्तिः सा पुनर्द्विविधा भवेत् ॥ १९७ ॥**

(सु०) आलप्तिं लक्षयति—**रागालपनमिति** । रागस्यालपनमालप्तिरित्यभिधीयते । नन्वालपनमालप्तिरिति पर्याय: ; कथमस्य लक्षणत्वमत आह—**प्रकटीकरणमिति** । येन स्वरसंदर्भेण राग: प्रकटीक्रियते सा आलप्ति: । सा द्विविधा ; रागालप्ति:, रूपकालप्तिरिति । तत्र रागाल्प्तिं लक्षयति—**रागालप्तिस्त्विति** । या रूपकप्रबन्धे एलामण्ठाद्यनपेक्ष्य प्रवर्तते सा रागालप्ति: ; सा चतुर्भि: स्वस्थानै रागालप्त्यवयवैर्वक्ष्यमाणै: स्यादिति गीतविदो भरतादयो विदु: । तत्र प्रथमं स्वस्थानं लक्षयति—**यत्रेति** । यत्र स्वरे राग उपवेश्यते स्थाप्यते स स्वर: स्थायीत्युच्यते । तत: स्थायिन आरोहेण चतुर्थ: स्वरो द्व्यर्ध इत्युच्यते । तस्माद्द्व्यर्धात्स्वरादधस्तने तृतीये स्वरे चालनं पुनरुच्चारणात्मकं वांशिकप्रसिद्धं मुखचाल इत्युच्यते । इदमालप्ते: प्रथमं स्वस्थानम् । द्वितीयं स्वस्थानं लक्षयति—**द्व्यर्धस्वर इति** । द्व्यर्धस्वरे स्थायिन: स्वराच्चतुर्थे स्वरे चालनं कृत्वा तत्रैव न्यसनं स्वस्थानसमाप्ति: । इदं द्वितीयं स्वस्थानम् । तृतीयं स्वस्थानं लक्षयति—**स्थायिस्वरादिति** । स्थायिन: स्वरादष्टम: स्वरो द्विगुण इत्युच्यते । चतुर्थो द्व्यर्ध: ; तयोश्चतुर्थाष्टमयो: स्वरयोर्मध्ये स्थिता स्वरा: पञ्चमषष्ठसप्तमा अर्धस्थिता इत्युच्यन्ते । तत्रैव चालनं कृत्वा अर्धस्थिते न्यसनं तृतीयं स्वस्थानम् । चतुर्थं स्वस्थानं लक्षयति—**द्विगुण इति** । द्विगुणे अष्टमस्वरे चालनं कृत्वा स्थायिनि न्यासादालप्तिसमाप्तिश्चतुर्थं स्वस्थानम् । एवंविधैश्चतुर्भि: स्वस्थानैर्युक्ता रागालप्तिरित्युच्यते । रागालप्तिविशेषं स्थापनां लक्षयति—**स्तोकस्तोकैरिति** । तत उक्तलक्षणालप्त्यनन्तरं स्तोकस्तोकै: प्रसन्नैर्बहुविधचातुर्ययुक्तैर्जीवस्वरस्यांशस्वरस्य व्याप्तिर्बहुश उच्चारणं मुख्यं येषु तथाविधै: स्थायै: करणभूतै रागस्य या अभिव्यक्ति: सा स्थापनेत्यभिधीयते ॥ -१८९—१९६ ॥

(क०) अथालप्तेरेव रागप्रकटीकरणात्मतां प्रकटीकर्तुं रूपकालप्तिं विवृणोति—**रूपकस्थेनेत्यादिना** । आलप्ते: स्थायं रागालप्तेरवयवं विधाय प्रथमं गीत्वा रूपकावयव: प्रकृतस्थायोचितलेन स्वाभिमत: प्रबन्धैकदेशो यदि

प्रतिग्रहणिकैकान्या भञ्जनीत्यभिधीयते ।
विधाय स्थायमालप्ते रूपकावयवो यदि ॥ १९८ ॥
प्रतिगृह्येत सा प्रोक्ता प्रतिग्रहणिका बुधैः ।
भञ्जनी द्विविधा ज्ञेया स्थायरूपकभञ्जनात् ॥ १९९ ॥
यदा तत्पदमानेन स्थायो रूपकसंस्थितः ।
नानाप्रकारः क्रियते सा ज्ञेया स्थायभञ्जनी ॥ २०० ॥
तैः पदैस्तेन मानेन समग्रं रूपकं यदि ।
अन्यथा चान्यथा गायेदसौ रूपकभञ्जनी ॥ २०१ ॥

प्रतिगृह्येतोपादीयेतेत्यर्थः । एषा प्रतिग्रहणिकालप्तिः । **तत्पदमानेनेति** । तच्छब्देनात्र प्रकृतत्वाद्रूपकं परामृश्यते । तस्य पदानि विदार्यवान्तरभागाः । तेषां मानेन प्रमाणेन तत्कालविश्रान्तियुक्तया क्रिययेत्यर्थः । तेन युक्तो रूपकसंस्थितो ऽवयवत्वेन प्रबन्धे ऽनुप्रविष्टः स्थायः । स्थायो ऽत्र प्रबन्धैकदेशः । नानाप्रकारो विचित्ररीतियुक्तः क्रियते गातृवादकप्रतिभाविशेषेणोद्भाव्यते चेत्सा स्थायभञ्जनी । **तैः पदैरित्यादि** । पदवत्पदानि यथा वाक्यस्य पदान्यवयवास्तथा प्रबन्धस्यावयवा विदारीभागाः पदानीत्युच्यन्ते । न तु वाचकानि सुबन्तादीनि वा भाषापदानि । **अन्यथा चान्यथा गायेदिति** । अत्रान्यथात्वं नाम प्रबन्धे प्रकृतधातोर्धात्वन्तरपरिग्रहः । तेनात्र वीप्सया समप्रबन्धस्य प्रकृततानस्थायानुकारिभिस्तानान्तरैस्तत्तद्रागोचितगमकादियुक्तैर्बहुधावयविन एव पुनः पुनरावृत्तिभिर्गानमभिप्रेत्यते तदासौ रूपकभञ्जनी भवति । अयं भावः—अस्यां रूपकालप्तौ प्रथममभिव्यक्तस्य रागस्य स्थायप्रतिग्रहभञ्जनीभ्यां प्रकटीकरणे सति किंचित्प्रतीयमानत्वं भवति । यथा जनसमाजे प्रविष्टत्वात्तत्स्वरूपेणाप्रतीतस्य देवदत्तस्य कार्यवशादितस्ततः संचारेण प्रकटीकरणे सति किंचित्प्रतीयमानत्वम् । यथा वा भिन्नवर्णेषु

वर्णालंकारसंपन्ना गमकस्थायचित्रिता ।
आलप्तिरुच्यते तज्ज्ञैर्भूरिभङ्गिमनोहरा ॥ २०२ ॥

मणिषु प्रोतत्वादप्रतीतस्य मुक्तामणेः सूत्रशैथिल्यादितस्ततः सरणेन स्वरूपप्रकटीकरणे सति किंचित्प्रतीयमानत्वं तद्वदिति ॥ एवं रूपकालप्तौ रागस्य प्रकटीकरणं द्रष्टव्यम् ॥ सकलालप्तिव्यक्तिष्वनुगतं सामान्यलक्षणमाह— **वर्णालंकारसंपन्नेत्यादि** । अत्र विशेषणसाम्यात्स्त्रीसमाधिर्ध्वन्यते । यथा वर्णालंकारादिसंपन्ना कामिनी कामुकदर्शने कदाचिदाविर्भूतं कुचदेशादिकं स्वाङ्गं किंचिद्दर्शयति ; एवं सविलासं तत्तिरोभावयति ; कदाचित्तिरोभूतं तदेव सव्याजं प्रकटीकरोति ; तथोक्तलक्षणालप्तिरपि स्वस्थानचतुष्टयैः स्वतन्त्रं तत्तद्रागं किंचिद्दर्शयन्ती तं तिरोभावयति ; कदाचित्तिरोभूतं तमेव प्रतिग्रहभञ्जनीभ्यां तत्तद्रागं प्रकटीकरोतीति सहृदयप्रतिभाविषय एषोऽर्थः । आलापस्तु पुमान्श्मश्र्वादिकमिव सदा रागमाविर्भावयति । नपुंसकमिवालपनं तदुभयसाधारणस्थितिं सूक्ष्मेक्षिकयावगन्तव्यम् ॥ १९७—२०२ ॥ इति रूपकालप्तिः ॥ इत्यालप्तिलक्षणम् ॥

(सु०) रूपकालप्तिं लक्षयति—रूपकस्थेनेति । प्रबन्धस्थेन रागेण तालेन चोपलक्षिता या आलप्तिः क्रियते सा रूपकालप्तिः । सा द्विप्रकारा ; प्रतिग्रहणिका भञ्जनी चेति । तत्र प्रतिग्रहणिकां लक्षयति—विधायेति । आलप्तेः स्थायमवयवं स्वस्थानरूपं पूर्वं विधाय गीत्वा रूपकस्य प्रबन्धस्यावयवो भागो यदि प्रतिगृह्यते उद्गृह्यते तदा प्रतिग्रहणिकालप्तिरित्युच्यते । भञ्जन्यालप्तिस्तु द्विविधा ; स्थायभञ्जनी रूपकभञ्जनी चेति । तत्र स्थायभञ्जनीं लक्षयति—यदेति । यस्यामालप्तौ रूपकः संस्थितः प्रबन्धाश्रितो यः स्थायवर्णो ऽवयवस्तस्य प्रबन्धस्य पदमानेन नानाप्रकारो ऽनेकभङ्गिकः क्रियते ; सा स्थायभञ्जनी । रूपकभञ्जनीं लक्षयति—तैः पदैरिति । तैः प्रबन्धस्थैः पदैः ; तेन प्रबन्धस्थेन मानेन समग्रमेव रूपकमन्यथान्यथाभङ्गिविशेषेण यस्यामालप्तौ गायको गायेत् ; सा रूपकभञ्जनी ।

**गातृवादकसंघातो वृन्दमित्यभिधीयते ।**
**उत्तमं मध्यममथो कनिष्ठमिति तत्त्रिधा ॥ २०३ ॥**

आलप्तीनां सामान्यलक्षणं कथयति—वर्णालंकारेति । ननु पूर्वमालप्तेः साधारणं लक्षणमुक्तं प्रकटीकरणमिति । तत्प्रशस्ताप्रशस्तसाधारणम् । इह तु प्रशस्तालप्तिलक्षणमिति संतोषं कुरु । पार्श्वदेवेन षोडशविधालप्तिरुक्ता—

"सर्वगीतप्रबन्धानामादावालप्तिरिष्यते ।
सालप्तिर्द्विविधा ज्ञेया विषमा प्राञ्जलेति च ॥
साक्षरानक्षरा चेति द्विविधापि चतुर्विधा ।
चतुर्विधाप्यष्टविधा सतालातालभेदतः ॥
सा पुनः षोडशविधा शुद्धसालगभेदतः ।" इति ॥

१९७—२०३ ॥ इति रूपकालप्तिः ॥ इत्यालप्तिलक्षणम् ॥

(क०) अथ वृन्दलक्षणमाह—**गातृवादकसंघात** इत्यादिना । ततकुतपे परिगणितासु घोषवत्यादिवीणासु कासांचिल्लक्षणानि **वाद्याध्याये** वक्ष्यन्ते । तत्रानुक्तलक्षणास्तु वीणा लोकत एवावगन्तव्याः । वंशादीनां गीतजनकत्वेन ततवाद्यसाधर्म्याद्वांशिकादिसुषिरवादकानां ततकुतपेऽनुप्रवेश उक्तः । एवं कांस्यतालादीनां गीतोपरञ्जकत्वाद्घनवाद्यवादकानामप्यवनद्धकुतपेऽनुप्रवेशः । तालस्य तु गीतादिमानहेतुत्वात्तूर्यत्रयप्रतिष्ठात्वेन सर्वत्रानुप्रवेशो द्रष्टव्यः । सुगममन्यत् ॥ १९७—२२३ ॥ इति वृन्दलक्षणम् ॥

प्रत्यक्षभरताचार्यः कल्लिनाथो विदांवरः ।
विप्रसंकीर्णविषयं प्रकीर्णकमवर्णयत् ॥

इति श्रीमदभिनवभरताचार्यरायवयकारतोडरमल्लक्ष्मणाचार्यनन्दनचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ प्रकीर्णकाध्यायस्तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

चत्वारो मुख्यगातारो द्विगुणाः समगायनाः ।
गायन्यो द्वादश प्रोक्ता वांशिकानां चतुष्टयम् ॥ २०४ ॥
मार्दङ्गिकास्तु चत्वारो यत्र तद्वृन्दमुत्तमम् ।
मध्यमं स्यात्तदर्धेन कनिष्ठे मुख्यगायनः ॥ २०५ ॥
एकः स्यात्समगातारस्त्रयो गायनिकाः पुनः ।
चतस्रो वांशिकद्वंद्वं तथा मार्दल्लिकद्वयम् ॥ २०६ ॥
उत्तमे गायनीवृन्दे मुख्यगायनिकाद्वयम् ।
दश स्युः समगायन्यो वांशिकद्वितयं तथा ॥ २०७ ॥
भवेन्मार्दल्लिकद्वंद्वं मध्यमे मुख्यगायनी ।
एका स्यात्समगायन्यश्चतस्रो वांशिकास्तथा ॥ २०८ ॥
इतो न्यूनं तु हीनं स्याद्यथेष्टमथवा भवेत् ।

(सु०) वृन्दं लक्षयति—गातृवादकेति । गातारो गायनाः ; गायन्यश्च ; वादका वांशिकादयः ; तेषां संख्याविशेषेण कवलितः संघातः समूहो वृन्दमित्युच्यते । तत्त्रिविधम् ; उत्तमं मध्यमं कनिष्ठं चेति । तत्रोत्तमं वृन्दं लक्षयति—चत्वार इति । यस्मिन्वृन्दे चत्वारो मुख्यगातारः समगायनाः ; द्विगुणाः ; अष्टौ गायन्यः ; द्वादश वांशिकाः ; वंशवादिनश्चत्वारः ; मार्दङ्गिकाश्चत्वार ; तदुत्तमं वृन्दम् । मध्यमं वृन्दं लक्षयति—मध्यमं स्यादिति । उत्तमार्धेन मध्यमं वृन्दं भवति । मुख्यगातारौ द्वौ ; समगायनाश्चत्वारः ; गायन्यः षट् ; वांशिकौ द्वौ ; मार्दङ्गिकौ द्वौ ; तन्मध्यमं वृन्दम् । कनिष्ठं वृन्दं लक्षयति—कनिष्ठ इति । मुख्यगायन एकः ; समगातारस्त्रयः ; गायन्यश्चतस्रः ; द्वौ वांशिकौ ; द्वौ मार्दङ्गिकौ ; तत्कनिष्ठं वृन्दम् । गायनीवृन्दमपि त्रिधा ; उत्तमं मध्यमं हीनं चेति । तत्रोत्तमं लक्षयति—उत्तम इति । मुख्ये द्वे गायन्यौ ; समगायन्यो दश ; द्वौ वांशिकौ ; द्वौ मार्दङ्गिकौ यत्र तदुत्तमं गायनीवृन्दम् । यत्रैका मुख्यगायनी ; समगायन्यश्चतस्रः ; एको वांशिकः ; एको मार्दङ्गिकस्तन्मध्यमं गायनीवृन्दम् । इत एतस्मान्मध्यमादपि न्यूनं कनिष्ठ-

उत्तमाभ्यधिकं वृन्दं कोलाहलमितीरितम् ॥ २०९ ॥
मुख्यानुवृत्तिर्मिलनंताललीनानुवर्तनम् ।
मिथस्त्रुटितनिर्वाहस्त्रिस्थानव्याप्तिशक्तिता ॥ २१० ॥
शब्दसादृश्यमित्येते प्रोक्ता वृन्दस्य षड्गुणाः ।
आह वृन्दविशेषं तु कुतपं भरतो मुनिः ॥ २११ ॥
ततस्य चावनद्धस्य नाट्यस्येति त्रिधा च सः ।
ततस्य कुतपो ज्ञेयो गायनः सपरिग्रहः ॥ २१२ ॥
वीणा घोषवती चित्रा विपञ्ची परिवादिनी ।
वल्लकी कुब्जिका ज्येष्ठा नकुलोष्ठी च किंनरी ॥ २१३ ॥
जया कूर्मी पिनाकी च हस्तिका शततन्त्रिका ।
औदुम्बरी च षट्कर्णः पौणो रावणहस्तकः ॥ २१४ ॥
सारङ्ग्यालापिनीत्यादेस्ततवाद्यस्य वादकाः ।
वांशिकाः पाविकाः पावाः काहलाः शङ्खवादकाः ॥ २१५ ॥

मिति । अन्यदपि कोलाहलाख्यं वृन्दं लक्षयति—उत्तमाभ्यधिकमिति । उत्तमाद्वृन्दादधिकैर्गायकादिभिर्युक्तं कोलाहलं वृन्दम । वृन्दगुणान्कथयति—मुख्यानुवृत्तिरिति । मुख्यानां गायकानामनुवृत्तिस्तदनुगामित्वम् ; मिलनमवैसादृश्यं गाने ; ताललयानुवर्तनं लीनं लयः ; त्रुटितस्यापूर्वस्य वः परस्परनिर्वाहः ; परिपूरणं स्थानत्रयव्याप्तिसामर्थ्यम् ; शब्दसादृश्यं शब्दानामतिशयेन वैसादृश्याभावः ; एते षट् वृन्दगुणाः । अन्यदपि वृन्दं कुतपाख्यं मतान्तरेण लक्षयति—आहेति । तत्कुतपवृन्दं त्रिधा ; ततसंबन्धि ; अवनद्धसंबन्धि ; नाट्यसंबन्धि चेति । तत्र ततसंबन्धि कुतपं लक्षयति—ततस्येति । ततसंबन्धिनि कुतपे गायकस्यायं परिग्रहो ज्ञातव्यः । को ऽसौ परिग्रह इत्यत आह—वीणेति । घोषवतीचित्रादीनां वीणानां वाद्याध्याये वक्ष्यमाणलक्षणानां वादका गायकस्य परिग्रहः । अन्यमपि परिग्रहं कथयति—वांशिका इति । वांशिका वंशवादकाः ;

मुहरीशृङ्गवाद्याद्यास्तथा तालधरा वराः ।
कुतपे त्ववनद्धस्य मुख्यो मार्दङ्गिकस्ततः ॥ २१६ ॥
पणवो दर्दुरो ढक्का मण्डिडक्का च डक्कुली ।
पटहः करटा ढक्का ढवसो घडसस्तथा ॥ २१७ ॥
हुडुक्का डमरू रुञ्जा कुडुक्का कुडुवा तथा ।
निःसाणस्त्रिवली भेरी तुम्बकी बोम्बडी तथा ॥ २१८ ॥
पट्टवाद्यं पटः कम्रा झल्लरीभाणसेल्लुकाः ।
जयघण्टा कांस्यतालो घण्टा च किरिकिट्टकम् ॥ २१९ ॥
वाद्यानामेवमादीनां पृथग्वादकसंचयः ।
वराटलाटकर्णाटगौडगुर्जरकोङ्कणैः ॥ २२० ॥
महाराष्ट्रान्ध्रहम्मीरचौलैर्मलयमालवैः ।
अङ्गवङ्गकलिङ्गाद्यैर्नानाभिनयकोविदैः ॥ २२१ ॥
अङ्गहारप्रयोगज्ञैर्लास्यताण्डवकोविदैः ।
विचित्रस्थानकप्रौढैर्विषमेषु सुशिक्षितैः ॥ २२२ ॥
नाट्यस्य कुतपः पात्रैरुत्तमाधममध्यमैः ।
कुतपानाममीषां तु समूहो वृन्दमुच्यते ॥ २२३ ॥

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढल-
देवनन्दननिःशङ्कशार्ङ्गदेवविरचिते संगीतरत्नाकरे
तृतीयः प्रकीर्णकाध्यायः ॥ ३ ॥

पाविका वक्ष्यमाणलक्षणा पाविकादयः ; तत्र वादकाः पावीवादकाः ; मुहरीं शृङ्गं च ये वादयन्ति ते मुहरीशृङ्गवादकाः ; तदाद्याः परा उत्तमास्तालधराश्चैतेषां समूहस्तत्कुतप इत्युच्यते । अवनद्धकुतपं लक्षयति—कुतपे त्विति । अवनद्धस्य कुतप एको मुख्यो मार्दङ्गिकः, पणवादीनां दर्दुरान्तानां वाद्यानां वाद्याध्याये

वक्ष्यमाणानां वादकप्रसिद्धानां पृथग्वादकानां संचयः समूहो मार्दङ्गिकश्चेत्यवनद्ध-कुतपः। नाट्यकुतपं लक्षयति—वराटेति। वराटलाटकर्णाटदेशोत्पन्नैरनेकाभि-नयकोविदैर्विवक्ष्यमाणाङ्गहारप्रयोगकुशलेषु विचित्रेषु स्थानकेष्वालीढादिषु नृत्ता-ध्याये वक्ष्यमाणेषु विषमेषु मण्डलादिषु सुनिश्चितैर्निश्चयवद्भिः पुरुषैर्युक्तो नाट्य-कुतप इत्युच्यते। एतेषां च पात्राणामुत्तममध्यमाधमत्वेन कुतपस्यापि त्रैविध्यम्। अमीषां त्रयाणां कुतपानां समूहः संघातो बृन्दमित्युच्यते ॥ २०३—२२३ ॥ इति बृन्दलक्षणम् ॥

इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगण्डभैरवश्रीमदनपोतनरेन्द्रनन्दन-भुजबलभीमश्रीसिंहभूपालविरचितायां संगीतरत्नाकरटीकायां संगीतसुधाकराख्यायां प्रकीर्णकाध्यायस्तृतीयः ॥

---



शिवाभ्यां नमः

श्री-निःशङ्कशार्ङ्गदेव-प्रणीतः

# संगीतरत्नाकरः

चतुरकल्लिनाथ-विरचितया कलानिध्याख्यटीकया सिंहभूपाल-
विरचितया संगीतसुधाकराख्यटीकया च समेतः

## चतुर्थः प्रबन्धाध्यायः

**रञ्जकः स्वरसंदर्भो गीतमित्यभिधीयते ।**
**गान्धर्वं गानमित्यस्य भेदद्वयमुदीरितम् ॥ १ ॥**

(क०) एवमुक्तलक्षणानां वाग्गेयकारादीनां व्यापारविषयत्वेन प्रसक्तान्गीतविशेषान्प्रबन्धाँल्लिलक्षयिषुरादौ गीतसामान्यलक्षणमाह—**रञ्जकः स्वरसंदर्भो गीतमिति** । संदर्भो गुम्फः । ननु स्वरसंदर्भो गीतमित्येतावतैव गीतस्य रञ्जकत्वं सिद्धम् । यतः 'स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते' इति स्वरशब्दनिरुक्तेः स्वराणां स्वत एव रञ्जकत्वात्तत्संदर्भस्यापि रञ्जकत्वसिद्धेः पुनरपि रञ्जकेति विशेषणमनर्थकं व्यवच्छेद्याभावादिति । नैतदस्ति । स्वराणां स्वत एव रञ्जकत्वेऽपि तत्संदर्भस्य

अनादिसंप्रदायं यद्गान्धर्वैः संप्रयुज्यते ।
नियतं श्रेयसो हेतुस्तद्गान्धर्वं जगुर्बुधाः ॥ २ ॥
यत्तु वाग्गेयकारेण रचितं लक्षणान्वितम् ।
देशीरागादिषु प्रोक्तं तद्गानं जनरञ्जनम् ॥ ३ ॥
तत्र गान्धर्वमुक्तं प्रागधुना गानमुच्यते ।
निबद्धमनिबद्धं तद्द्वेधा निगदितं बुधैः ॥ ४ ॥
बद्धं धातुभिरङ्गैश्च निबद्धमभिधीयते ।
आलप्तिर्बन्धहीनत्वादनिबद्धमितीरिता ॥ ५ ॥
सा चास्माभिः पुरा प्रोक्ता निबद्धं त्वधुनोच्यते ।
संज्ञात्रयं निबद्धस्य प्रबन्धो वस्तु रूपकम् ॥ ६ ॥
प्रबन्धावयवो धातुः स चतुर्धा निरूपितः ।

कदाचिदरञ्जकत्वं भवति । यं कंचिद्रागं प्रकृत्य प्रवेशनिग्रहाभ्यामन्तरेण तत्र विवादिस्वरप्रयोगे सति प्रकृतरागहानेररञ्जकः संदर्भः स्यात् । तद्व्यवच्छेदेन रञ्जकग्रहणमर्थवद्भवति । अतो रञ्जकेति संदर्भविशेषणम्; न स्वरविशेषणम । तथा सत्यरञ्जकस्वराभावेन व्यवच्छेद्याभावाद्वैयर्थ्यमेव भवति । गीतभेदान्दर्शयितुमाह—गान्धर्वं गानमित्यादिना । गान्धर्वं मार्गः । गानं तु देशीत्यवगन्तव्यम् । अनादिसंप्रदायमित्यनेन गान्धर्वस्य वेदवदपौरुषेयत्वमिति सूचितं भवति । गानं तु वाग्गेयकारादिपर-तन्त्रत्वात्पौरुषेयमेव । तत्र गान्धर्वमुक्तं प्रागिति । स्वरगतरागविवेक-योर्जात्याद्यन्तरभाषान्तं यदुक्तं तद्गान्धर्वमित्यर्थः । अधुना गानमुच्यत इति । अस्मिन्नध्याये गानविशेषः प्रबन्धः प्रतिपाद्यत इत्यर्थः । बद्धं धातुभिरङ्गैश्चेति । धातवोऽङ्गानि च समनन्तरमेव वक्ष्यन्ते । प्रबन्धावयवो धातुरिति । पूर्वं धातुशब्देन गेयमुक्तम् । अत्र प्रबन्धावयवो विवक्षितः ।

उद्ग्राहः प्रथमस्तत्र ततो मेलापकध्रुवौ ॥ ७ ॥
आभोगश्चेति तेषां च क्रमाल्लक्ष्माभिदध्महे ।
उद्ग्राहः प्रथमो भागस्ततो मेलापकः स्मृतः ॥ ८ ॥
ध्रुवत्वाच्च ध्रुवः पश्चादाभोगस्त्वन्तिमो मतः ।
ध्रुवाभोगान्तरे जातो धातुरन्योऽन्तराभिधः ॥ ९ ॥
स तु साल्गसूडस्थरूपकेष्वेव दृश्यते ।

गेयं नाम सकलप्रबन्धानुगतो धर्मः । प्रबन्धावयवस्तु धर्मैकदेश इति तयोर्भेदो द्रष्टव्यः । **उद्ग्राहः प्रथमो भाग** इति । उद्गृह्यते प्रारभ्यते येन गीतं स उद्ग्राह इति प्रबन्धस्य प्रथमावयवोऽन्वर्थसंज्ञः । **ततो मेलापकः स्मृत** इति । उद्ग्राहध्रुवयोर्मेलनकारकत्वान्मेलापक इति द्वितीयोऽप्यवयवोऽन्वर्थो द्रष्टव्यः । **ध्रुवत्वादिति** । नित्यत्वादित्यर्थः । तृतीयावयवस्य नित्यत्वं तावदुद्ग्राहव्यतिरिक्ततरापेक्षया सकलप्रबन्धेष्वनपायात् । तेन द्विधातुषु प्रबन्धेषु मेलापकाभोगयोस्त्रिधातुषु प्रबन्धेषु सर्वत्र मेलापकस्यैव परित्यागः । ध्रुवस्य न कचिदपि परित्याग इत्यर्थः । **आभोगस्त्वन्तिमो मत** इति । अन्तिमो धातुः प्रबन्धस्य परिपूर्णहेतुत्वादाभोग इति कारणे कार्योपचार उक्तः । 'आभोगः परिपूर्णता' इत्यभिधानादाभोगशब्दस्य परिपूर्णतावाचकत्वम् । **ध्रुवाभोगान्तरे जात** इति । ध्रुवाभोगान्तरे ध्रुवाभोगयोर्मध्ये जात उत्पन्नो निर्मित इत्यर्थः । अनेन गानकाले ध्रुवस्यावृत्तिषु कृतासु ततः परमाभोगजिज्ञासायां चरमावृत्त्यन्ते गेय इति गम्यते । **स त्विति** । साल्गसूडस्थरूपकेषु वक्ष्यमाणेषु ध्रुवमण्ठादिष्वेवेति नियमेनैलादिषु शुद्धसूडक्रमस्थेषु वर्णेलादिषु क्रमेषु वा श्रीरङ्गादिषु विप्रकीर्णेषु वा न कार्य इत्यर्थः । अत्र दृश्यत इति दृशिग्रहणेन ध्रुवादिष्वपि यत्र चिरंतनप्रयोगादन्तरो दृष्टस्तत्रैव कार्यो नान्यत्रेति

वातपित्तकफा देहधारणाद्धातवो यथा ॥ १० ॥
एवमेते प्रबन्धस्य धातवो देहधारणात् ।
तत्र मेलापकाभोगौ न भवेतां क्वचित्क्वचित् ॥ ११ ॥
स द्विधातुस्त्रिधातुश्च चतुर्धातुरिति त्रिधा ।
प्रबन्धोऽङ्गानि षट् तस्य स्वरश्च बिरुदं पदम् ॥ १२ ॥
तेनकः पाटतालौ च प्रबन्धपुरुषस्य ते ।

नियमान्तरस्यापि सूचितत्वान्मण्ठादिषु दर्शनात्तत्रैव कार्यः । ध्रुवे त्वदर्शनात्तत्र न कार्य इति मन्तव्यम् । उद्ग्राहादिषु धातुशब्दप्रवृत्तौ निमित्तं सदृष्टान्तं दर्शयति—**वातपित्तेत्यादिना** । एतेनाङ्गेभ्यो धातूनां व्यापारो दर्शितः । **तत्रेत्यादि** । **मेलापकाभोगौ क्वचिन्न भवेतामिति** । यत्रोभावपि युगपन्न भवेतां तत्रोद्ग्राहध्रुवयोरेव विद्यमानत्वात्स प्रबन्धो द्विधातुः । द्वितीयस्य क्वचिच्छब्दस्यासहायस्यानुपयोगात्तदर्थं पूर्ववाक्यान्मेलापकाभोगौ पर्यायेण न भवेतामित्यर्थभेदेनानुषङ्गः कर्तव्यो भवति । तेन यद्यप्युभयथापि प्रबन्धस्य त्रिधातुत्वं सिद्ध्यति । तथाप्युभयत्र प्रबन्धलक्षणेषु यत्र कुत्राप्याभोगाभावेन त्रिधातुत्वस्यादृष्टत्वादनुषङ्गेऽपि वचनविपरिणामं कृत्वा क्वचिन्मेलापको न भवेदिति वाक्यमुन्नेयम् । तदा स प्रबन्धो मेलापकाभावात्त्रिधातुर्भवतीत्येव दृष्टोऽर्थो लभ्यते । एवमनुषङ्गन्यायं हृदि निधाय केवलं क्वचिच्छब्दं प्रयुञ्जानस्य ग्रन्थकारस्याभिप्रायोऽवगन्तव्यः । यत्र तूभावपि मेलापकाभोगौ भवतस्तत्रोद्ग्राहादीनां चतुर्णामपि विद्यमानत्वात्स प्रबन्धश्चतुर्धातुरित्ययं प्रकारस्तात्पर्यतोऽवगम्यते । तच्च तात्पर्यं चतुर्धातुरित्यनेनाभिव्यज्यते । **प्रबन्धोऽङ्गानीत्यादि** । प्रबन्ध इति पूर्वेण त्रिधेत्यनेनोन्नीयते; त्रिधा प्रबन्ध इति । अङ्गानीत्यस्योत्तरेणान्वयः कर्तव्यः । **तस्याङ्गानि षडिति** । तस्य द्विधातुत्वादिप्रकारभेदभिन्नस्य प्रबन्धस्य ।

भवन्त्यङ्गवदङ्गानि मङ्गलार्थप्रकाशके ॥ १३ ॥
तत्र तेनपदे नेत्रे स्तः पाटबिरुदे करौ ।
कराभ्यामुद्भवात्कार्ये कारणत्वोपचारतः ॥ १४ ॥
प्रबन्धगतिहेतुत्वात्पादौ तालस्वरौ मतौ ।
स्वराः षड्जादयस्तेषां वाचकाः सरिगादयः ॥ १५ ॥
स्वराभिव्यक्तिसंयुक्ताः स्वरशब्देन कीर्तिताः ।
बिरुदं गुणनाम स्यात्ततोऽन्यद्वाचकं पदम् ॥ १६ ॥
तेनेतिशब्दस्तेनः स्यान्मङ्गलार्थप्रकाशकः ।

तानि षडङ्गान्युद्दिशति—स्वरश्चेत्यादि । अङ्गवदङ्गानीत्येतदेव प्रतिपादयन्नाह—मङ्गलार्थप्रकाशक इत्यादिना । तत्र मङ्गलप्रकाशकस्तेनकः । अर्थप्रकाशकं पदम् । कराभ्यामुद्भवादिति । पाटस्य तावत्करोद्भवत्वमवनद्धवाद्याक्षरोक्तकररूपस्य तस्य करव्यापारजातत्वात् । शङ्खादिसुषिरवाद्योद्भवस्य मुखोद्भवत्वेन करोद्भवत्वाभावे ऽपि कचित्साहचर्याच्छत्रिन्यायेन करोद्भवत्वं लक्षणया बिरुद्धमपि करोद्भवत्वं प्रायेण वितरणहेतुकस्य तस्य करव्यापारजातत्वात् । रूपादिहेतुकस्यापि करजत्वं पूर्ववत् । अतः कार्ये कारणत्वोपचारात्पाटबिरुदे हस्तौ स्त इत्युक्तम् । पादौ तालस्वरौ मताविति । तालस्य तु सकलप्रबन्धगतत्वेऽप्यगतत्वं भवति । स्पर्शनस्य सकलशरीरगतत्वेऽपीन्द्रियत्ववत्स्वरस्य च सकलप्रबन्धगतत्वे ऽपि षड्जादिवाचकानां सरिगादीनामेव स्वराभिव्यक्तिहेतुत्वादसाधारण्येनागतत्वव्यपदेशः । यथाकाशस्य सकलशरीरच्छिद्रगतत्वे ऽपि कर्णशष्कुल्यवच्छिन्नस्यैव शब्दग्राहकत्वेन श्रोत्रव्यपदेशः । तेनेतिशब्दस्य मङ्गलप्रकाशकत्वं प्रतिपादयितुमाह—तेनेतिशब्द इत्यादिना । तेनकरणेन तेनेतिशब्दो मङ्गलस्य प्रकाशकः

ओं तत्सदिति निर्देशस्तत्त्वमस्यादिवाक्यतः ॥ १७ ॥
तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मना ।
लक्षितस्तेन तेनेति पाटो वाद्याक्षरोत्करः ॥ १८ ॥
तालस्तालप्रकरणे सप्रपञ्चो निरूप्यते ।

स्यात् । यतो महावाक्यादौ तदिति ब्रह्म प्रकाश्यते । तेन मङ्गलात्मना ब्रह्मणायं प्रबन्धस्तेनतेनेति लक्षितोऽङ्कित इति सिंहावलोकनन्यायेन योजना ॥ १—१८ ॥

(सु०) एवं प्रकीर्णकाध्याये वाग्गेयकारालप्त्यादिलक्षणमुक्तम् । तत्र वाग्गेयकारेण किं कर्तव्यमित्यपेक्षायां च प्रबन्धाल्लिँलक्षयिषू रूपकभञ्जनीभ्यां वालप्तौ रूपकोपयोग उक्तः । तत्र किमिदं प्रबन्धापरपर्यायं रूपकमित्यपेक्षायां च प्रबन्धाल्लिँलक्षयिषुरुपोद्घातं रचयति—रञ्जक इति । स्वराणां संदर्भो रचनाविशेषो मनोरञ्जको गीतमित्यभिधीयते । तस्य गीतस्य गान्धर्वं गानमिति भेदद्वयमुक्तं भरतादिभिः । तत्र गान्धर्वं लक्षयति—अनादीति । यद्गान्धर्वैः संप्रयुज्यते गीयते तच्च न स्वबुद्ध्या गीयते; किं त्वनादिसंप्रदायात् । अनादिमान्यो यः संप्रदायो गुरुशिष्यपरंपरया परिज्ञानम्; तस्मादेव नियतं ग्रहांशमूर्च्छनादिनियमयुक्तम्; श्रेयस ऐहिकसुखस्य स्वर्गापवर्गरूपस्य हेतुः कारणं तद्गान्धर्वमित्यभिधीयते । भरतेनाप्युक्तम्—

"यस्तु तन्त्रीकृतं प्रोक्तं तदातोद्यसमाश्रयम् ।
गान्धर्वमिति तज्ज्ञेयं स्वरतालपदात्मकम् ॥
अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः ।
गन्धर्वाणां च यस्माद्धि तस्माद्गान्धर्वमुच्यते ॥" इति ॥

गानं लक्षयति—यत्त्विति । वाग्गेयकारेण पूर्वोक्तेन लक्षणेन वक्ष्यमाणलक्षणान्वितं यद्रचितं पञ्चतालेश्वरादि देशीरागाश्च रागाङ्गादयः; आदिशब्देनान्यदपि स्वबुद्धिरचितं यज्जनान्रञ्जयति तद्गानमित्युच्यते । तत्र तयोर्गान्धर्वगानयोर्मध्ये गान्धर्वं

जातिग्रामरागादि पूर्वमुक्तम्। अधुना गानं निरूप्यते। तस्य गानस्य जनानां रुचिविशेषेण बहवो भेदा उक्ताः पार्श्वदेवेन; यदाह—

"आचार्याः सममिच्छन्ति व्यक्तिमिच्छन्ति पण्डिताः।
स्त्रियो मधुरमिच्छन्ति विकृष्टमितरे जनाः॥
उच्चनीचस्वरोपेतं न द्रुतं न विलम्बितम्।
पदतालैः समं गीतं सममाचार्यवल्लभम्॥
क्रियाकारकसंयुक्तं संधिदोषविवर्जितम्।
व्यक्तस्वरसमायुक्तं व्यक्तं पण्डितसंमतम्॥
ललितैरक्षरैर्युक्तं शृङ्गाररसरञ्जितम्।
श्राव्यनादसमोपेतं मधुरं प्रमदाप्रियम्॥
स्वरैरुच्चतरैर्युक्तं प्रयोगबहुलीकृतम्।
विकृष्टं नाम तद्गीतमितरेषां मनोहरम्॥
गानमारभटीवृत्त्या वीरसङ्गतवर्णकम्।
उच्चनीचस्वरं गीतं सोत्साहं शूरवल्लभम्॥
प्रेमोद्दीप्तपदप्रायं शृङ्गाररसभूषितम्।
करुणाकाकुसंयुक्तं करुणं विरहिप्रियम्॥
विपरीतपदैर्युक्तं स्वरभङ्गयुपबृंहितम्।
गीतं हास्यरसोदारं परिहासं विटप्रियम्॥
गूढार्थैः परमार्थैश्च संसारसुखमुख्यकैः।
पदैर्नियोजितं गीतमध्यात्मं योगिवल्लभम्॥
शुभवाक्ययुतैर्गीतं शुद्धपञ्चमनिर्मितम्।
विवाहाद्युत्सवे गेयं मङ्गलं महिलाप्रियम्॥
देवतास्तुतिसंयुक्तं तत्प्रभावप्रबोधकम्।
आस्तिक्योत्पादनं गीतं रम्यं भक्तजनप्रियम्॥
अभ्यवस्थानकं गीतं तालपाटैरलक्षितम्।
प्रयोगबहुलं रूक्षं विषमं वादिवल्लभम्॥" इति॥

तस्य गीतस्य त्रैविध्यं कथयति—निबद्धमिति। निबद्धं लक्षयति—बद्धमिति। धातुभिः प्रबन्धावयवैरुद्ग्राहादिभिरङ्गैः स्वरबिरुदादिभिर्यद्बद्धं रचितं तन्निबद्ध-

मित्यभिधीयते। आलप्तिस्तु तालाद्युपनिबन्धहीनत्वादनिबद्धमित्युच्यते। सालप्तिः पुरा प्रकीर्णकाध्यायेऽस्माभिः प्रोक्ताः। तस्मान्निबद्धमुच्यते। संज्ञात्रयमिति। बद्धस्य तिस्रः संज्ञा भवन्ति; प्रबन्धो; वस्तु; रूपकमिति। संज्ञात्रयस्य प्रवृत्तिनिमित्तमुक्तं पार्श्वदेवेन—

"चतुर्भिर्धातुभिः षड्भिश्चाङ्गैर्यस्मात्प्रबध्यते।
तस्मात्प्रबन्धः कथितो गीतलक्षणकोविदैः॥
रागाद्यारोपणे नेतुः स्यादस्मिन्रूपकाभिधा।
उद्ग्राहाद्यास्तु चत्वारि स्वरादीनि च षट् तथा॥
वसन्ति यत्र तज्ज्ञेयः प्रबन्धो वस्तु संज्ञया।" इति॥

धातुभिर्बद्धमिति पूर्वमुक्तम्। तत्र को धातुरित्यपेक्षायामाह—प्रबन्धावयव इति। प्रबन्धस्यावयवोंऽशो धातुरित्युच्यते। स चतुष्प्रकारः। उद्ग्राहकः; मेलापकः; आभोगः; अन्तरश्चेति। एतांल्लक्षयति—उद्ग्राह इति। प्रबन्धस्य प्रथमो भाग उद्ग्राह इत्युच्यते। द्वितीयो भागो मेलापकः। तृतीयो भागो ध्रुवः। तस्य ध्रुवशब्दस्य व्युत्पत्तिस्तु ध्रुवत्वान्निश्चलत्वादिति। उद्ग्राहानन्तरमाभोगानन्तरं च गानादन्तिमो भाग आभोगः। अन्यो धातुरन्तराभिधो ऽस्तीत्याह—ध्रुवाभोगेति। ध्रुवस्य आभोगस्य च मध्ये ऽन्तराख्यः पञ्चमो धातुरस्ति। तत्कथं पञ्चेति नोक्तमत आह—स त्विति। अन्तराख्यो धातुर्न सर्वत्र प्रबन्धेषु। किं तु सालगसूडप्रबन्धेष्वेव। ततश्च सर्वेषु प्रबन्धेषु चत्वार एव धातवः। धातुशब्दं व्युत्पादयति—वातपित्तेति। वातपित्तकफा दोषाः देहं दधति तस्माद्धातवो यथोच्यन्ते; तथैत उद्ग्राहादयः प्रबन्धस्य देहधारणाद्धातवः। 'डुधाञ् धारणपोषणयोः' इत्यस्मादौणादिके तुन्प्रत्यये धातुरिति रूपम्। उद्ग्राहादीनां व्युत्पत्तिरुक्ता पार्श्वदेवेन—

"आदावुद्ग्राह्यते गीतं येनोद्ग्राहः स कीर्तितः।
प्रोक्तो मेलापकस्तज्ज्ञैरुद्ग्राहध्रुवमेलनात्॥
प्रबन्धेषु ध्रुवत्वेन ध्रुव इत्यभिधीयते।
स्वयं यत्र प्रबन्धे स्यादनेनैव च पूरणम्॥
आभोगः कथितस्तेन गीतविद्याविशारदैः।
ध्रुवस्याभोगकरणादाभोग इति केचन॥" इति॥

तेषु धातुषु मध्ये मेलापकाभोगौ द्वौ धातू कचित्केषुचित्प्रबन्धेषु न स्याताम्। तदुक्तं पार्श्वदेवेन—

"वर्ज्यौ मेलापकाभोगौ प्रबन्धेषु द्विधातुषु।
त्रिधातुकप्रबन्धेषु तयोरेकं विवर्जयेत्॥
एलायां ढेङ्किकायां च स्यादन्ते नियमादिमौ।
अन्येषु च प्रबन्धेषु स्यातां गीतानुसारतः॥" इति॥

प्रबन्धभेदान्कथयति—स द्विधातुरिति। स प्रबन्धस्त्रिप्रकारः। द्विधातुस्त्रिधातुश्चतुर्धातुरिति। अयं विशेष आदौ द्विधातुत्वादिप्रबन्धलक्षणेन स्फुटीभविष्यतीति विशेषतो नोक्तः। तस्य प्रबन्धस्य षडङ्गानि। स्वरः; बिरुदम्; पदम्; तेनकः; पाटः; तालश्चेति। अथ कथं तेषामङ्गत्वमत आह—प्रबन्धपुरुषस्येति। प्रबन्धरूपस्य पुरुषस्य नेत्रादीनामङ्गानि यथा तथा तानि। तस्मादङ्गानीत्युच्यन्ते। कस्याङ्गस्य किमङ्गत्वं तदाह—मङ्गलार्थेति। तेनपदे कल्याणरूपमर्थं प्रकाशयतस्तस्मात्प्रकाशकत्वान्नेत्रे; नेत्रे अपि रूपकादिकमर्थं प्रकाशयतः। पाटबिरुदे प्रबन्धपुरुषस्य करौ करोद्भवत्वात्। पाटोऽक्षराणि तावत्कराभ्यां मृदङ्गादिवादनादेव प्रभवन्ति। बिरुदमपि पदविन्यासेन प्रकाश्यते। तस्मात्कार्ययोः पाटबिरुदयोः कारणत्वमुपचारात्। तालस्वरौ प्रबन्धपुरुषस्य गतिहेतुत्वाच्चरणावुच्येते। एतेषामङ्गानां लक्षणान्याचष्टे—स्वरा इति। षड्जादयः स्वराः पूर्वमुक्ताः। तेषां वाचकाः सरिगमपधनीति वर्णास्तत्तत्स्वराभिव्यक्तिसहिताः स्वरशब्देनोच्यन्ते। गुणो नाम भुजबलभीमादिबिरुदशब्देनोच्यते। तदुक्तं संगीतसमयसारे—

"बिरुदशब्दो बिरुद्धार्थो महाराष्ट्रे प्रसिद्धितः।
परेभ्यस्तत्प्रदानेन बिरुदं सूरिभिः स्मृतम्॥
तद्वीररससंयुक्तं द्विषामुद्वेगदायकम्।
रसान्तरेण संयुक्तं यत्परं बिरुदं तु तत्॥" इति।

ततो बिरुदादन्यद्वाचकं पदमित्युच्यते। तेनेत्ययं शब्दस्तेन इत्युच्यते। अयं तेनशब्दः कल्याणरूपमर्थं प्रकाशयति। कथमस्य कल्याणार्थप्रकाशकत्वमित्याह—ओं तत्सदिति। ओं तत्सदिति श्रुतौ निर्देशोऽस्ति। तस्मात्तस्य-

मेदिन्यथानन्दिनी स्याद्दीपनी भावनी तथा ॥ १९ ॥
तारावलीति पञ्च स्युः प्रबन्धानां तु जातयः ।
अङ्गैः षडादिभिर्द्व्यन्तैः केषांचन मते श्रुतिः ॥ २० ॥
नीतिः सेना च कविता चम्पूरित्युदितास्तु ताः ।
अनिर्युक्तश्च निर्युक्तः प्रबन्धो द्विविधो मतः ॥ २१ ॥
छन्दस्तालाद्यनियमादाद्यः स्यान्नियममात्परः ।
पुनः प्रबन्धास्त्रिविधाः सूडस्था आलिसंश्रयाः ॥ २२ ॥
विप्रकीर्णाश्च तत्रादौ सूडलक्षणमुच्यते ।
एलाकरणढेङ्कीभिर्वर्तन्या झोम्पडेन च ॥ २३ ॥
लम्भरासैकतालीभिरष्टभिः सूड उच्यते ।
वर्णो वर्णस्वरो गद्यं कैवाडश्चाङ्कचारिणी ॥ २४ ॥

मत्स्यादिवाक्यतस्तच्छब्देन ब्रह्मेत्युच्यते । उपलक्षणे च तृतीया । ततश्च तेनेन कल्याणरूपेण ब्रह्मोपलक्षितमर्थं वदति । तेन हेतुना तेनतेनेत्ययं शब्दो मङ्गलार्थप्रकाशको भवति । पाटं लक्षयति—पाट इति । पाट इति वाद्याक्षराणां धिगिधिगादीनामुत्करः समूहो वाद्याध्याये वक्ष्यमाणः पाट इत्युच्यते । तालस्तालाध्याये वक्ष्यते ॥ १—१८ ॥

(क०) प्रबन्धानां जातिभेदान्दर्शयति—**मेदिनीत्यादिना** । **षडादिभिर्द्व्यन्तैरङ्गैरिति** । षड्भिरङ्गैर्बद्धा मेदिनी जातिः ; पञ्चभिरानन्दिनी ; चतुर्भिर्दीपनी ; त्रिभिर्भावनी ; द्वाभ्यां तारावलीति क्रमो द्रष्टव्यः । मतान्तरेण श्रुत्यादिकाः संज्ञास्तासामेव क्रमेण योजनीयाः । **छन्दस्तालाद्यनियमादिति** । छन्दांसि त्रिष्टुबादीनि । तालाश्चचत्पुटादयः । आदिशब्देनाङ्गधातुरागरसभाषादयो गृह्यन्ते । तेषामनियमादाद्योऽनिर्युक्त इत्यर्थः । तेषां नियमात्तु परो निर्युक्तः स्यादित्यर्थः । **अष्टभिः सूड उच्यत इति** ।

कन्दस्तुरगलीला च गजलीला द्विपद्यपि ।
चक्रवालः क्रौञ्चपदः स्वरार्थौ ध्वनिकुट्टनी ॥ २५ ॥
आर्या गाथा द्विपथकः कलहंसश्च तोटकम् ।
घटो वृत्तं मातृका च ततो रागकदम्बकः ॥ २६ ॥
पञ्चतालेश्वरस्तालार्णव इत्येषु कश्चन ।
सूडक्रमस्य मध्ये चेदसावालिक्रमो भवेत् ॥ २७ ॥
सूडालिक्रमसंबन्धाद्द्वात्रिंशदिति कीर्तिताः ।
ततोऽन्ये विप्रकीर्णास्तान्प्रसिद्धान्कतिचिद्ब्रुवे ॥ २८ ॥
श्रीरङ्गः श्रीविलासः स्यात्पञ्चभङ्गिरतः परम् ।
पञ्चाननोमातिलकौ त्रिपदी च चतुष्पदी ॥ २९ ॥
षट्पदी वस्तुसंज्ञश्च विजयस्त्रिपथस्तथा ।
चतुर्मुखः सिंहलीलो हंसलीलोऽथ दण्डकः ॥ ३० ॥
झम्पटः कन्दुकः स्यात्त्रिभङ्गिर्हरविलासकः ।
सुदर्शनः स्वराङ्कः श्रीवर्धनो हर्षवर्धनः ॥ ३१ ॥
वदनं चच्चरी चर्या पद्धडी राहडी तथा ।
वीरश्रीर्मङ्गलाचारो धवलो मङ्गलस्तथा ॥ ३२ ॥
ओवी लोली ढोल्लरी च दन्ती षट्त्रिंशदित्यमी ।

सूड इति गीतविशेषसमूहवाची देशीशब्दः । अत्रोद्दिष्टानामेलादिशब्दानां मध्ये केषांचिद्रूढतैव केषांचिदन्वर्थत्वं चेत्यवगन्तव्यम् ॥ -१९–३२- ॥

(सु०) एवमङ्गान्युक्त्वाङ्गसंख्याविशेषेण प्रबन्धजातीः कथयति—मेदिनीति । षड्भिरङ्गैरुपनिबद्धा मेदिनीत्युच्यते; पञ्चभिरङ्गैरुपनिबद्धा आनन्दिनी; चतुर्भिरङ्गैरुपनिबद्धा दीपनी; त्रिभिरङ्गैरुपनिबद्धा भावनी; द्वाभ्यामङ्गाभ्यामुप-

अङ्घ्रौ खण्डद्वयं सानुप्रासमेकेन धातुना ॥ ३२ ॥

निबद्धा तारावलीति। मतान्तरेण नामान्तराण्याह—केषांचनेति। षडङ्गोपेता श्रुतिः; पञ्चाङ्गोपेता नीतिः; चतुरङ्गोपेता सेना; त्र्यङ्गोपेता कविता; द्व्यङ्गोपेता चम्पूरित्येतानि नामान्युदितानि। श्रुतेर्वेदस्य शिक्षाज्योतिषनिरुक्तनिघण्टुच्छन्दोव्याकरणानि षडङ्गानि। नीतेः पञ्चाङ्गानि—कर्मणामारम्भोपायः; पुरुषद्रव्यसंपत्; देशकालविभागः; विनिपातप्रतीकारः; कार्यसिद्धिश्चेति। सेनायाश्चत्वार्यङ्गानि—हस्त्यश्वरथपदातिरूपाणि। कवितायास्त्रीण्यङ्गानि—शक्तिर्व्युत्पत्तिरभ्यासश्चेति। चम्प्वा द्वे अङ्गे—गद्यं पद्यं चेति। पुनरपि प्रबन्धस्य द्वैविध्यं कथयति—अनिर्युक्त इति। अनयोर्लक्षणमाचष्टे—छन्द इति। छन्दसां तालानां च नियमं विनोपनिबद्धो ऽनिर्युक्तः; छन्दस्तालनियमेनोपनिबद्धो निर्युक्त इति। युक्तायुक्तोभयात्मकता अपि प्रबन्धा उक्ताः पार्श्वदेवेन; यदाह—

"क्वचिदङ्गं क्वचिच्छन्दो गीते यस्मिन्विराजते।
उभयात्मकमित्याहुर्गीतं गीतविशारदाः॥" इति॥

पुनरपि प्रबन्धानां त्रैविध्यं कथयति—पुनरिति। प्रबन्धास्त्रिविधाः; सूडस्थाः; आलिस्थाः; प्रकीर्णकाश्चेति। तत्र सूडलक्षणमाह—एलेति। एलादिभिरष्टभिर्मार्गसूडः; तत्र स्थिताः प्रबन्धाः सूडस्थाः। आलिसंमिश्रितान्प्रबन्धान्विभजते—वर्णा इति। वर्णादयस्तालार्णवान्ताश्चतुर्विंशतिः। तेषु मध्ये एलादीनां मध्यस्थो यः कश्चन प्रबन्धो भवति चेत्तदा सो ऽप्यालिक्रमस्थ इत्युच्यते। सर्वे सूडा आलिक्रमस्था मिलिताः प्रबन्धा द्वात्रिंशत्। विप्रकीर्णान्प्रबन्धानाह—ततो ऽन्य इति। तेभ्यः सूडालिक्रमस्थेभ्यः प्रबन्धेभ्यो ऽन्ये विप्रकीर्णा इत्युच्यन्ते। ते च बहवः। तस्मात्कियत एव प्रतिज्ञाय कथयति—श्रीरङ्ग इति। श्रीरङ्गाद्या ध्वन्यन्ताः षट्त्रिंशद्विप्रकीर्णाः। क्वचिद्दन्तीति पाठः॥ -१९—२२- ॥

(क०) प्रथमोद्दिष्टामेलां लक्षयति—अङ्घ्रौ खण्डद्वयमित्यादिना। एलायां प्रथमं तावत्पादत्रयं गेयम्। तदङ्घ्रौ प्रथमपादे सानुप्रासमनुप्रासालंकारसहितम्; 'वर्णसाम्यमनुप्रासः' इति हि तस्य लक्षणम्। तथाभूतं

ततः प्रयोगस्तदनु पल्लवाख्यं पदत्रयम् ।
द्वे स्तो विलम्बिते तत्र तृतीयं द्रुतमानतः ॥ ३४ ॥
एवं पादत्रयं गेयमुद्ग्राहे तुल्यधातुकम् ।
केवलं तु तृतीयेऽङ्घ्रौ संबोधनपदान्वितः ॥ ३५ ॥

खण्डद्वयमेकेन धातुनैकरूपेण येन गेयं स्याद्गातव्यं भवेत् । एतेन खण्डद्वये मातुभेदः कर्तव्य इत्यर्थः । अन्यथैकमेव खण्डं द्विर्गेयं स्यादिति वदेत् । एतत्खण्डद्वयं मिलित्वा वक्ष्यमाणेषु षोडशसु पदेषु कामसंज्ञं प्रथमं पदमित्यवगन्तव्यम् । **ततः प्रयोग** इति । ततः खण्डद्वयानन्तरं प्रयोगान्तरम् ; प्रयोगोऽक्षरवर्जिता गमकालप्तिः कार्या । तथा च वक्ष्यति—

"आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
सैव प्रयोगशब्देन शार्ङ्गदेवेन शब्दिता ॥" इति ।

अयं प्रयोगो मन्मथवत्संज्ञकं द्वितीयं पदम् । **तदन्विति** । प्रयोगान्तरं पल्लवाख्यं प्रत्येकं पल्लवशब्दसंज्ञकं पदत्रयं ज्ञेयम् । तत्र पदत्रये द्वे क्रमात्कान्तजितसंज्ञके प्रथमद्वितीये पादविलम्बिते माने स्तः । तृतीयं मित्रसंज्ञकं पदं द्रुतमानतो भवति । द्रुतादिमानानां स्वरूपं तालाध्याये वक्ष्यते । **एव पादत्रयमिति** । पञ्चपदानि मिलित्वैकः पादः । एवं प्रथमपादोक्तलक्षणयुक्त्या तुल्यधातुकमित्यनेन भिन्नमातुकमिति गम्यते । **उद्ग्राहे गेयमिति** । पादत्रयं मिलित्वोद्ग्राहो भवतीत्यर्थः । द्वितीयपादस्थितानां पञ्चानां पादानां क्रमेण विकारी, मान्धाता, सुमती, शोभी, सुशोभीति संज्ञा वेदितव्याः । एवमित्यतिदेशेन तृतीयेऽपि पादे प्रथमपादोक्तलक्षणे प्राप्ते विशेषं दर्शयितुमाह—**केवलं त्विति** । तुशब्दो भिन्नक्रमः । **तृतीयेऽङ्घ्रौ त्विति** । तृतीये ऽङ्घ्रौ तु सानुप्रासधातुककखण्डद्वयानन्तरं केवलं

प्रयोगोऽन्त्यो विधातव्यो न पल्लवपदस्थितिः ।
अमुं प्रयोगं मेलापं प्राहुः सोमेश्वरादयः ॥ ३६ ॥
स्तुत्यनामाङ्कितो मध्यविलम्बितपदत्रयः ।
ध्रुवस्ततस्तत्र पूर्वमेकधातुपदद्वयम् ॥ ३७ ॥

संबोधनपदान्वितो ऽन्ते संबोधनार्थेन पदेन युक्तः । अत्र केवलशब्देना-संबोधनार्थपदान्तरयोगो निषिद्ध्यते । एतेन प्रथमद्वितीयाङ्घ्रिगतप्रयोग-द्वयस्य संबोधनार्थैकैकपदयोगाभ्यनुज्ञा विज्ञायते । अन्यथा ह्यक्षरवर्जितत्वा-त्प्रयोगाणामर्थवत्वाभावात्पदत्वं न सिद्ध्येदिति भावः । **अन्त्यो विधातव्य** इति । पूर्वप्रयोगद्वयापेक्षया भिन्नधातुकः कर्तव्य इत्यर्थः । तुशब्दद्योतितं विशेषान्तरं दर्शयति—**न पल्लवपदस्थितिरि**ति । तृतीये पादे त्रीण्यपि पल्लवपदानि न कर्तव्यानीत्यर्थः । अतस्तृतीयेऽङ्घ्रौ पदद्वयमेव । तत्र प्रथमं गीतकसंज्ञं द्वितीयमञ्चितसंज्ञं वेदितव्यम् । एलाप्रबन्धस्य त्रिधातुक-त्वमभ्युपगच्छतामेतानि द्वादश पदान्युद्ग्राहो भवन्तीति मतम् । चतुर्धा-तुकत्वमभ्युपगच्छन्तः सोमेश्वरादयस्त्वेकादशानामेवोद्ग्राहत्वमुक्त्वा द्वादश-पदं मेलापकमाहुरित्याह—**अमुं प्रयोगमि**ति । **स्तुत्यनामाङ्कित** इत्यादि । ततोऽनन्तरं मध्यविलम्बितयोः पदत्रयं यस्येति स तथोक्तः । एतदुक्तं भवति—त्रिषु पदेष्वाद्यं पदद्वयं मध्यमाने गेयम्; तृतीयं विलम्बिते गेयम् इति । अन्यथा—'. . . . तत्र पूर्वमेकधातुपदद्वयम् । भिन्नधातु तृतीयं स्यात्' इत्युत्तरं वचनं विरुध्येत । पूर्वपदद्वयस्य मिथो ऽपि मानभेदे सत्येकधातुत्वासंभवात् । एवं पदत्रयात्मको ध्रुवो भवति । त्रिषु पदेषु मध्ये यत्र कुत्रापि स्तुत्यनामाङ्कितः स्तुत्यस्येष्टदेवताराजादेर्नाम्नाङ्कितः कर्तव्य इत्यर्थः । एतानि त्रीणि ध्रुवपदानि क्रमेण विचित्रवासवमृदुसंज्ञकानि

भिन्नधातु तृतीयं स्यादाभोगस्तदनन्तरम् ।
गेयो वाग्गेयकारेण स्वाभिधानविभूषितः ॥ ३८ ॥
पुनर्गीत्वा ध्रुवे त्यागो ग्रहस्तु विषमो भवेत् ।
एलासामान्यलक्ष्मैतत्पूर्वाचार्यैरुदीरितम् ॥ ३९ ॥

वेदितव्यानि । **अभोगस्तदनन्तरमिति** । तदनन्तरं ध्रुवस्थानानन्तरम्; अभोगो वाग्गेयकारेण स्वाभिधानविभूषितो गेयः, स्वनामाङ्कितः कर्तव्यः । अयमाभोगः सुचित्रसंज्ञकं षोडशं पदम् । **पुनर्गीत्वा ध्रुवे त्याग इति** । एतानि षोडश पदानि द्विवारं गीत्वा ध्रुवे त्रयोदशपदस्यादौ न्यासः कर्तव्य इत्यनेन गाने नियम उक्तः । **ग्रहस्तु विषमो भवेदिति** । ग्रहः समातीतानागतभेदेन त्रेधा वक्ष्यते । तुशब्दः प्रबन्धान्तरापेक्षयास्य विशेषद्योतनार्थः । प्रबन्धान्तरेषु ग्रहाणामनियमः; अत्र नियम इति विशेषः । **विषमो भवेदिति** । विषमः समादन्यः; अतीतानागतयोरेकतर इत्यर्थः । वाग्गेयकारेच्छया अतीतो वानागतो वा ग्रहः कर्तव्य इत्युक्तं भवति ॥ -३३-३९ ॥

(सु०) एलासामान्यलक्षणमाह—**अङ्काविति** । पूर्वमेकेन धातुना समानगेयेन खण्डद्वयं गातव्यम् । ततः प्रयोगो गमकसंदर्भरूपः । ततो ऽनन्तरं पल्लवसंज्ञकं पदत्रयम् । तत्र पदत्रय आद्ये द्वे पदे विलम्बिते कार्ये तृतीयं पदं द्रुतमानेन कार्यम् । एवंविध एकः पादः । एवमुद्ग्राहे पादत्रयं गातव्यम् । एवं तृतीयपादे पल्लवपदं न कर्तव्यम् । किं तु प्रयोगान्तरं संबोधनपदैर्युक्तो ऽन्यः प्रयोगः कर्तव्यः । अमुं तृतीयपदस्थं प्रयोगं **सोमेश्वरादयो रत्नावल्यादिग्रन्थकर्तारो** मेलापकाख्यमाहुः । एतावतोद्ग्राहे जाते ध्रुवः कर्तव्यः । कीदृक्कर्तव्य इत्यपेक्षायामाह—**स्तुत्यनामाङ्कित** इति । स्तुत्यस्य नायकस्य नाम्ना अङ्कितं चिह्नितं मध्यविलम्बितं पदत्रयं यस्मिंस्तथाविधः । तत्र पदत्रये पदद्वयमेकधातु समानं गेयम् । अपरं तु भिन्नधातु विसदृशं गेयम् । एवंविधध्रुवानन्तरमाभोगः कर्तव्यः । तत्राभोगे वाग्गेयकारेण स्वनाम निक्षेप्तव्यम् । पुनराभोगानन्तरं ध्रुवं गीत्वा

मण्ठद्वितीयकङ्कालप्रतितालेषु कश्चन ।
तालो ऽस्यां त्यागसौभाग्यशौर्यधैर्यादिवर्णनम् ॥ ४० ॥
एलानां बहवः सन्ति विशेषास्तेषु केचन ।
व्युत्पत्तये निरूप्यन्ते मतङ्गादिमतोदिताः ॥ ४१ ॥
अकारे दैवतं विष्णुरिकारे कुसुमायुधः ।
लक्ष्मीर्लकार एलानामिति वर्णेषु देवताः ॥ ४२ ॥
काममन्मथवत्कान्तजितमत्तविकारिणः ।
मान्धातृसुमती शोभिसुशोभी गीतकोचितौ ॥ ४३ ॥

त्यागः समापनम् । एलायां च विषम एव ग्रहः । इदं च मेलापकानां सामान्यलक्षणं सर्वास्वेलास्वनुगतं पूर्वाचार्यैर्भरतादिभिरुक्तम् ॥ -३३—३९ ॥

(क०) तालनियमं दर्शयति—**मण्ठद्वितीयेति** । गणादिनियमस्यापि वक्ष्यमाणत्वादयं निर्युक्तः प्रबन्धः । **समान** इति । समानो मधुर इत्यादिना दशप्राणानुद्दिश्य ; 'इमे दश प्राणा दशसु मान्धात्रादिपदेषु स्युः' इत्यस्यायमभिप्रायः—एते दशैव प्राणा षोडशस्वपि पदेषु वर्तन्त इति । कथं तेषां मध्ये केषांचिदेकधातुकत्वादेकधातुकयोर्द्वयोस्त्रयाणां वैक एव प्राणः । तथा हि द्वितीयाङ्घ्रौ प्रयोगात्मकस्य मान्धातृसंज्ञकद्वितीयपदस्य प्रथमाङ्घ्रौ प्रयोगात्मकस्य मन्मथवत्संज्ञकद्वितीयपदस्य चैकधातुकत्वाद्द्वयोरप्येक एव समानो नाम प्राणः । तथा सुमतिशोभिसुशोभिसंज्ञकानां द्वितीयाङ्घ्रिपल्लवपदानां कान्तजितमत्तसंज्ञकानां प्रथमाङ्घ्रिपल्लवपदानां च तुल्यधातुकत्वात्क्रमेण द्वयोर्द्वयोर्मधुरः सान्द्रः कान्त इति त्रयः प्राणाः । तथा तृतीयाङ्घ्रौ द्विखण्डात्मकप्रथमपदस्य द्वितीयः प्रथमाङ्घ्रिगतयोर्द्विखण्डात्मनोः प्रथमपदयोश्च त्रयाणामपि समानधातुकत्वादेक एव दीप्तसंज्ञकः प्राणः । एव-

विचित्रो वासवमृदुसुचित्रा इति षोडश ।
नामान्येलापदानां स्युः षोडशानामनुक्रमात् ॥ ४४ ॥
पद्मालया पत्रिणी च रञ्जनी सुमुखी शची ।
वरेण्या वायुवेगा च वेदिनी मोहिनी जया ॥ ४५ ॥
गौरी ब्राह्मी च मातङ्गी चण्डिका विजया तथा ।
चामुण्डैलापदेष्वेताः क्रमात्षोडश देवताः ॥ ४६ ॥
समानो मधुरः सान्द्रः कान्तो दीप्तः समाहितः ।
अग्राम्यः सुकुमारश्च प्रसन्नौजस्विनाविति ॥ ४७ ॥

मेकादशसु पदेषु पञ्च प्राणाः । ततो द्वादशादिषु पञ्चसु पदेषु यथासंख्यं समाहितादयः पञ्च प्राणा योजनीयाः । अत एव द्वादशपदे प्राणस्य समाहिताख्या स्यात्; न तु साधारणत्वात् । 'प्रयोगो ऽन्यो विधातव्यः' इत्यत्रान्य इत्यस्य भिन्नधातुक इति व्याख्यानमुपपन्नम् । एवं षोडशसु पदेषु दश प्राणा वेदितव्याः ॥ ४०—४७ ॥

(सु०) एलासु तालनियमं दर्शयति—मण्ठेति । विवक्षणीयं कथयति—त्यागेति । त्याग औदार्यम्; सौभाग्यं लोकानुरागः । आदिशब्देन धार्मिकत्वादि । एतेषां गुणानां वर्णनमेलासूपनिबन्धनीयम् । एलानां भेदान्कथयति—एलाना-मिति । एलानां बहवो भेदा भवन्ति । ग्रन्थविस्तरभयात्तेषु भेदेषु कियन्त एव भेदा निरूप्यन्ते । व्युत्पत्तये एलास्वरूपज्ञानाय; स्वरूपे परिज्ञाते भेदान्त-रमूहयितुं शक्यत इत्यर्थः । एलावर्णेषु देवताः कथयति—अकार इति । अनेनैलायां प्राशस्त्यं प्रतिपादितं भवति । एलाया षोडशानां पदानां नामानि कथयति—कामवदिति । एलायां षोडश पदानि; एवमुद्ग्राहे पादत्रयम् । तत्र प्रथमपादे खण्डद्वयस्य द्वे पदे; पल्लवपदानि त्रीणि; एवं पञ्च पदानि । द्वितीयपादे ऽप्येवं पञ्च पदानि; एवं दश पदानि । तृतीयपादे पल्लवपदत्रयाभावाद्द्वे पदे । एवं पादत्रयसंयुक्त उद्ग्राहे द्वादश पदानि; ध्रुवे त्रीणि; आभोगपदं चैकमेवं षोडश

**मान्धात्रादिपदेषु स्युः प्राणा दश दशस्विमे ।**
**समानो ऽल्पाक्षरध्वानो मधुरः स्वल्पनादया ॥ ४८ ॥**
**अल्पमूर्च्छनया युक्तः सान्द्रस्तु निबिडाक्षरः ।**
**अल्पध्वनिस्तारगतिः कान्तः कान्तध्वनिर्मतः ॥ ४९ ॥**

पदानि । एवं षोडशसु पदेषु देवताः कथयति—**पद्मालयेति** । पद्मालयादयश्चामुण्डान्ताः षोडश देवताः पदेषु ज्ञातव्याः । प्राणान्कथयति—**समान** इति । मान्धात्रादि सुचित्रान्तानि दश पदानि । तेषु समानादयः प्राणाः पदजीवितहेतवो ज्ञातव्याः । तेन हीनं पदं निर्जीवमेव भवति । अलक्षणमित्यर्थः ॥ ४०—४७- ॥

समानादीनां प्राणानां क्रमेण लक्षणान्याह—**समानोऽल्पाक्षरेत्यादिना** । अल्पाक्षरध्वानः ; अक्षराणि च ध्वानश्चेति द्वंद्वः । अल्पा अक्षरध्वाना यस्य स तथोक्तः । समानस्याल्पाक्षरत्वं तावत्प्रयोगात्मकपदान्वितत्वात् । नन्वक्षरवर्जितत्वात्प्रयोगस्याल्पाक्षरत्वं कथं घटत इति चेत् ; उक्तमेवैतत् ; 'संबोधनपदान्वितः' इति । अल्पध्वानत्वं च तस्य प्रयोगान्वितत्वादेव । प्रयोगे ऽपि गमकालप्तिरूपकस्वराणां परिपूर्णत्वाभावादिति भावः । समानो नामायं प्राणः प्रथमद्वितीयाङ्घ्रिगतयोः प्रयोगात्मकयोर्मन्मथवन्मान्धातृसंज्ञकयोः पदयोर्योजनीयः । **मधुर** इति । स्वल्पनादया अल्पमूर्च्छनया युक्तः प्राणो मधुर इत्युच्यते । मूर्च्छनाया अल्पत्वं तानीकरणाद्भवति । तानीकरणं नाम पूर्वमतानस्य तानत्वसंपादनम् । तच्च तानत्वमादिमस्वरमुच्चार्यारोहेण वावरोहेण वा क्रमेण मध्यस्थितानां स्वराणां स्पर्शमात्रेणान्तिमस्वरोच्चारणे सति भवतीति मन्तव्यम् । अत एव स्वल्पनादयेति विशेषणम् । तस्यैव स्पष्टीकरणार्थमयं प्राणः प्रथमद्वितीयाङ्घ्रिगतयोर्विलम्बितमानयोः कान्तसुमतिसंज्ञयोः पल्लवपदेष्वादिमयोः पदयोर्योजनीयः । **सान्द्रस्त्वित्यादि** । निबिडाक्षर इत्यनेनात्र धात्वपेक्षया मातोराधिक्यं प्रतीयते । **अल्पध्वनिरिति** । मात्वपेक्षया धातोरल्पत्वादिति भावः । **तारगतिरिति** । तारस्थाने गतिः प्रवेशो यस्येति ।

**दीप्तस्तु दीप्तनादः स्यात्स्थायिस्थस्तु समाहितः ।**
**अग्राम्यो ऽक्षरनादानामावृत्त्या समुदाहृतः ॥ ५० ॥**
**सुकुमारो वर्णनादमूर्च्छनाकोमलत्वतः ।**
**प्रसन्नः स्यात्पदस्थानस्वरादीनां प्रसादतः ॥ ५१ ॥**

अनेन प्रथमद्वितीयाङ्घ्रिगतयोर्विलम्बितमानयोः पल्लवमध्यस्थितयोर्जितशोभिसंज्ञयोः पदयोः पूर्वपदापेक्षया किंचिदुच्चत्वेन सान्द्रप्राणाश्रयत्वं कर्तव्यमित्यर्थः । **कान्त** इत्यादि । कान्तध्वनिरिति तस्य लक्षणम् । ध्वनेः कान्तत्वं नाम रक्त्यतिशययुक्तत्वम् । अङ्घ्रिद्वयपल्लवान्तिमयोर्द्रुतमानयोर्मत्तसुशोभिसंज्ञयोः पदयोः कान्तो नाम प्राणो योजनीयः । **दीप्तस्त्वित्यादि** । दीप्तनादस्तारस्वरत्वात्पूर्णस्वरत्वाच्चेत्यर्थः । अयं प्राणो ऽङ्घ्रित्रयादिमेषु द्विखण्डात्मकेषु कामविकारिगीतसंज्ञकेषु त्रिषु पदेषु योजनीयः । **स्थायिस्थस्त्वित्यादि** । तुशब्दो भिन्नक्रमः । समाहितस्त्वित्यन्वयः । स्थायिस्थ इति लक्षणम् ; स्थायिनि वर्णे तिष्ठतीति स्थायिस्थः । पूर्वप्रयोगद्वयादन्यप्रयोगात्मके ब्रुचितसंज्ञके द्वादशे पदे तत्र तत्रोचितान्स्थायिनः कृत्वा अक्षरवर्जितायां गमकालप्तौ कृतायां समाहिताख्यः प्राणस्तत्र योजितो भवति । **अग्राम्य** इत्यादि । **अक्षरनादानामावृत्त्येति** । तत्राक्षराणामावृत्तिस्तावद्गीते वाक्यावयवेषु पदेषु यान्यक्षराणि तेषां मध्ये पूर्वपूर्वपदान्तिमयोर्द्वयोस्त्रयाणां वाक्षराणां चक्रवालरीत्योत्तरोत्तरपदादिमत्वेनोच्चारणम् । एवं तत्तदक्षरगतानामेव स्वराणामुच्चारणं नादानामावृत्तिः । एवं द्विविधया आवृत्त्या निष्पन्नोऽग्राम्यो नाम प्राणो ध्रुवखण्डादिमे मध्यलययुक्ते चित्राख्ये पदे योजनीयः । **सुकुमार** इत्यादि । **वर्णनादमूर्च्छनाकोमलत्वत** इति । वर्णानामक्षराणां नादानां स्वराणां मूर्च्छनानां मूर्च्छनाविकाररूपत्वादुपचारेण तथा व्यपदेशः । एतेषां वर्णादीनां कोमलत्वतः सुकुमार इत्यर्थः । अयं वासवाख्ये मध्यलययुक्ते ध्रुवखण्डस्य द्वितीये पदे योजनीयः । **प्रसन्नः स्यादिति** । पदानां तावत्प्रसादोऽविलम्बेनार्थप्रकाशः ।

ओजोबहुल ओजस्वीत्येभिः सर्वगुणैर्युताः ।
एला श्रोतुः प्रयोक्तुश्च धर्मकामार्थसिद्धिदाः ॥ ५२ ॥
गणमात्रावर्णदेशविशिष्टास्ताश्चतुर्विधाः ।
गणः समूहः स द्वेधा वर्णमात्राविशेषणात् ॥ ५३ ॥
गुरुर्लघुरिति द्वेधा वर्णो ऽनुस्वारसंयुतः ।
सविसर्गो व्यञ्जनान्तो दीर्घो युक्तपरो गुरुः ॥ ५४ ॥

स्थानादीनां तु प्रसन्नत्वं विविक्तस्वरूपत्वम् । अत्रादिशब्देन तानगमकादयो गृह्यन्ते । अयं प्राणो ध्रुवखण्डान्तिमे विलम्बितयुक्ते मृदुसंज्ञके पदे योजनीयः । **ओज** इत्यादि । ओजोबहुल इति; ओजो नाम समासभूयस्त्वम्; तच्च पदेषु तानेष्वतानेष्वपि द्रष्टव्यम्; तेन बहुलः प्रचुरः प्राण ओजस्वीत्यन्वयः । अयमाभोगात्मनि सुचित्रसंज्ञके षोडशे पदे योजनीयः ॥ -४८—५२ ॥

तानेव प्राणाँल्लक्षयति—**समान** इति । अल्पान्यक्षराणि धातोर्नादितश्च यस्मिन्स तथाविधः समान इत्युच्यते । यस्त्वल्पेन नादेन युक्तया, अल्पकमूर्च्छनया युक्तः स मधुर इत्युच्यते । अल्पा मूर्च्छना षट्स्वरादि निविडानि घनान्यक्षराणि धातोर्नादतश्च यस्मिन्स सान्द्रः । यस्त्वल्पनादः स च तारपूर्वको तारव्यापकः स कान्तः, कान्तध्वनी रमणीयनादः । दीप्तस्तीव्रो नादो यस्यासौ दीप्तः । स्थायिनि वर्णे स्थितः समाहितः । अक्षरनादानामावृत्त्या वीप्सया पुनः पुनरुच्चारणेनोपलक्षितोऽग्राम्यः । अक्षरध्वनिमूर्च्छनानां कोमलत्वेन मार्दवत्वेनोपलक्षितः सुकुमारः । पदानां मन्द्रमध्यतारस्थानानां स्वराणाम्; आदिशब्देनाक्षरस्थानानां प्रसन्नतया युक्तः प्रसन्न इत्युच्यते । ओजसा समासभूयस्त्वेन बहुलो व्याप्त ओजस्वीत्युच्यते । **एभिः सर्वै**रिति । एभिः पूर्वोक्तलक्षणरूपैः समस्तैर्गुणैरुक्तैला: श्रोतुराकर्णयितुः प्रयोक्तुर्गातुः कर्तुर्वा धर्मादिपुरुषार्थदायिन्यः ॥ -४८—५२ ॥

(क०) एलासामान्यलक्षणमुक्त्वा तद्भेदान्दर्शयितुमाह—**गणमात्रे-त्यादिना** । तत्र गणस्य सामान्यलक्षणमाह—**गणः समूह** इति । वर्ण-

वा पदान्ते त्वसौ वक्रो द्विमात्रो मात्रिको लघुः ।
ऋजुर्लिपौ भ्रे ध्के ष्पे च रहोर्योगे स वा लघुः ॥ ५५ ॥
ए ओ इं हिं पदान्ते वा प्राकृते लघवो मताः ।
पदमध्ये ऽप्यपभ्रंशे हुं हे ऊ ए इमित्यमी ॥ ५६ ॥
तत्र वर्णगणो वर्णैस्त्रिभिरष्टविधश्च सः ।
मस्त्रिगुः पूर्वलो यः स्यान्मध्यलो रो ऽन्तगुस्तु सः ॥ ५७ ॥
तो ऽन्तलो मध्यगो जः स्याद्भादिर्भस्त्रिलघुस्तु नः ।
इत्येषां देवता भूमिजलाग्निमरुतो ऽम्बरम् ॥ ५८ ॥
सूर्यचन्द्रसुराधीशाः क्रमात्कुर्युः फलानि ते ।
श्रीवृद्धिनिधनस्थानभ्रंशनिर्धनतारुजः ॥ ५९ ॥
कीर्तिमायुश्च वर्ण्यस्य श्लोकगीतादियोगतः ।
सोमो भौमो बुधो जीवः शुक्रः सौरी रविस्तमः ॥ ६० ॥
क्रमादकचटानां तपयशानां च देवताः ।
वर्गाणां स्युः फलान्येषामायुःकीर्ती असद्यशः ॥ ६१ ॥
संपत्सुभगता कीर्तिमान्द्यं मृत्युश्च शून्यता ।
प्रयोगे श्लोकगीतादौ स्तुत्यस्योक्तानि सूरिभिः ॥ ६२ ॥

गणानां लक्षणमाह—**मस्त्रिगुरिति** । त्रिगुस्त्रयो गुरवो यस्मिन्निति त्रिगुः । मगण इत्यर्थः । अत्र गुरुलघ्वोराद्याक्षराभ्यां तयोः संज्ञा वेदितव्या । **पूर्वलो य इति** । पूर्वलः पूर्वं लघुर्यस्मिन्नसौ पूर्वलः । अनेनैव द्वितीयतृतीयौ च गुरू इति गम्यते । तेन वर्णत्रयात्मकेषु गणेष्वेकस्मिन्गुरुलघ्वोरेकेन विशेषिते तदितरयोस्तदितररूपता द्रष्टव्या । **श्लोकगीतादियोगत** इति । श्लोकगीतयोरादावुपक्रमे योगः प्रयोगः । तस्मात् : श्लोके वा गीते वा प्रथमोच्चार्यमाणत्वादित्यर्थः ॥ ५३—६२ ॥

(सु०) एलां विभजते—गणमात्रेति । एलाश्चतुर्विधा भवन्ति । गणैला; वर्णैला; मात्रैला; देशैलेति । तत्र गणैलां लक्षयितुं पूर्वं गणं लक्षयति—**गण** इति । समूहो गण इत्युच्यते । प्रकरणाल्लघुगुरुमात्राणामिति लभ्यते । स गणो द्विप्रकारः; वर्णगणो मात्रागण इति । वर्णो द्विविधः; लघुर्गुरुरिति । तत्र को लघुः ? को वा गुरुः ? इत्यपेक्षायामाह—**अनुस्वारसंयुत** इति । अनुस्वारेण संयुतः; विसर्गसंयुतः; व्यञ्जनान्तो हलन्तः; दीर्घ आकारादिस्वरसंयुतः; युक्तः परो वर्णो यस्य स युक्तपरः; एते गुरवः । **वा पदान्त** इति । पदान्ते वर्तमानो लघुरपि वर्णो विकल्पेन गुरुर्भवति । एतल्लक्षणहीनो वर्णो लघुरित्युच्यते । उक्तेभ्यो-ऽन्यो वर्णो लघुरिति ज्ञेयः । गुरुर्द्विमात्र इत्युच्यते; स च लिपौ वक्रो लेखनीयः । लघुर्मात्रिक इत्युच्यते; स च लिपौ सरलो लेखनीयः । स च लघुर्वर्णो जिह्वामूलीयोपध्मानीययो रेफहकारयोर्योगे वा परतः स्थिते सति विकल्पेन लघुर्भवति । संयुक्तपदादयो वर्णाः प्राकृतभाषायां 'ए ओ इं हिं' अमी चत्वारो वर्णाः पदस्यान्ते वर्तमाना विकल्पेन लघवो भवन्ति । अपभ्रंशभाषायां 'हुं हे ए ओ इ' अमी पञ्च वर्णाः पदमध्ये वर्तमाना विकल्पेन लघवो भवन्ति । **तत्रेति** । तत्र वर्णगणमात्रागणयोर्मध्ये वर्णगणस्त्रिभिर्वर्णैर्भवन्ति । स चाष्टविधः—मगणः; यगणः; रगणः; सगणः; तगणः; जगणः; भगणः; नगण इति । एतैर्लो भवति । **मस्त्रिगुरिति** । गुरुत्रयसंयुक्तो मगणः; यथा—ऽऽऽ; पूर्वं लघुर्यस्मात्; अर्थात्पश्चाद्गुरुद्वयम्; स यगणः; यथा—।ऽऽ; मध्ये लघुर्यस्यासौ मध्यलः; अर्थादादावन्ते च गुरुरिति लभ्यते; स रगणः; यथा—ऽ।ऽ; अन्ते गो गुरुर्यस्यासावन्तगुः; अर्थादादौ लघुद्वयं लभ्यते; स सगणः; यथा—।।ऽ; अन्ते लो लघुर्यस्य सोऽन्तलः; अर्थादादौ गुरुद्वयं लभ्यते; स तगणः; यथा—ऽऽ।; मध्ये गो गुरुर्यस्यासौ मध्यगः; अर्थादादावन्ते च लघुरिति लभ्यते; स जगणः; यथा—।ऽ।; गो गुरुरादौ यस्यासौ गादिः; अर्थादन्ते लघुद्वयं लभ्यते; स भगणः; यथा—ऽ।।; लघुत्रयवान्नगणः; यथा ।।।; इति । एतेषामष्टानां देवताः कथयति—**एतेषां देवता** इति । फलमाह—**क्रमात्कुर्युरिति** । एतेऽष्टौ गणाः श्लोकगीतादिप्रयोगाद्वर्ण्यस्य वर्णनीयस्य नायकस्य क्रमाल्लक्ष्म्यादीनि फलानि जनयन्ति । अयमेवार्थोऽन्यत्रोक्तः । यथा—

**मात्रा कला लघुर्लः स्यात्तद्गणाश्छपचास्तदौ ।**
**स्युः षट्पञ्च चतुस्त्रिद्विसंख्या मात्रायुताः क्रमात् ॥ ६३ ॥**

**यथा—ऽऽऽ इति छगणः; ऽऽ। इति पगणः; ऽऽ इति चगणः; ऽ। इति तगणः; ऽ इति दगणः । इति पञ्च मात्रागणाः ॥**

**अत्युक्तायास्तु चत्वारो भेदा रतिगणा मताः ।**

"मो भूमिः श्रियमातनोति यजलं पृथ्वी रवह्निर्मृति
सो वायुः परदूरदेशगमनं तव्योम शून्यं फलम् ।
जः सूर्यो रुजमादधाति विपुलं भेन्दुर्यशो निर्मलं
नो नाकः सुखमच्युतं तदखिलं ज्ञेयं प्रयत्नाद्बुधैः ॥" इति ॥

अकारादीनामष्टानां वर्णानां देवतादिनिवेशनेन च फलमाह—**सोम** इति । असयशः असत्कीर्तिः; मान्द्यं जाड्यम्; शून्यता मोहः ॥ ९३—६२ ॥

(क०) मात्रागणान्दर्शयितुमाह—**मात्रा कलेत्यादि** । तद्गणा मात्रागणाश्छपचास्तदौ क्रमात्षट्पञ्चचतुस्त्रिद्विसंख्या मात्रायुताः स्युरिति । षण्मात्रायुतश्छगणः; पञ्चमात्रायुतः पगणः; चतुर्मात्रायुतश्चगणः; त्रिमात्रायुतस्तगणः; द्विमात्रायुतो दगण इति क्रमो द्रष्टव्यः । अत्र पञ्चमात्रादिष्वाद्याक्षरैः संज्ञा कृता । छगणस्तु सांकेतिको मतभेदप्रदर्शनार्थ इति द्रष्टव्यः । अथान्यानपि मात्रागणान्दर्शयितुमाह—**अत्युक्तायास्त्वित्यादि** । अत्युक्ता नामाक्षरद्वयात्मैकैकपादश्छन्दोभेदस्तस्याः । **चत्वारो भेदा** इति ।

"पादे सर्वगुरावाद्याल्लघून्न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥
ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।"

किं तु तत्र लपूर्वा ये तेष्वादावधिको लघुः ॥ ६४ ॥
एवं मध्याभवा भेदा अष्टौ कामगणाः स्मृताः ।
तद्वद्बाणगणा भेदा प्रतिष्ठायास्तु षोडश ॥ ६५ ॥

इति छन्दःशास्त्रोक्तप्रकारेण प्रस्तारे कृते गुर्वक्षरद्वयात्मकः प्रथमो भेदः। लघुगुर्वक्षरद्वयात्मको द्वितीयः। गुरुलघ्वक्षरद्वयात्मकस्तृतीयः। लघ्वक्षरद्वयात्मकश्चतुर्थ इत्येते चत्वारो भेदास्ते प्रत्येकं रतिगणा रतिगणाख्या मात्रागणा मताः। तत्र विशेषं दर्शयितुमाह—**किं त्वित्यादि**। तत्र तेषु चतुर्षु भेदेषु मध्ये ये लघुपूर्वा भेदास्तेषु लघुपूर्वेषु भेदेष्वादौ प्रथमं लघुरधिकः; कर्तव्य इति शेषः। अयमर्थः—अत्युक्तायाश्चतुर्षु भेदेषु द्वितीयचतुर्थौ लघुपूर्वौ। तयोरेकैकलघ्वाधिक्ये सति प्रथमं त्रिमात्रो द्वितीयश्चतुर्मात्रो भवति। प्रथमं द्विमात्रश्चतुर्थस्त्रिमात्रो भवति। एवमुत्तरत्रापि द्रष्टव्यम्। नन्वत्र द्वावेव लघुपूर्वौ भेदौ; लपूर्वा ये तेष्विति बहुवचननिर्देशः कथमिति चेत्; सत्यम्। वक्ष्यमाणानामपि मध्याप्रतिष्ठयोर्भेदानामबुद्धौ संगृह्य तथा निर्देशः कृत इत्यदोषः। तत्रापि लघुपूर्वेष्वादावधिको लघुः कर्तव्य इत्यर्थः। इममेवार्थमतिदिशन्मध्याप्रतिष्ठयोर्भेदान्गणान्तरव्यपदेशभाक्त्वेन दर्शयति—**एवं मध्येत्यादिना**। मध्याभवाः; मध्या नामाक्षरत्रयात्मैकैकपादश्छन्दोभेदः; तस्यां भवाः। **अष्टौ भेदा** इति। पूर्ववत्प्रस्तारे कृते सति त्रिगुर्वादयो मयरसतजभना अष्टौ वर्णगणा भवन्ति। तत्र लघुपूर्वेषु यसजनेष्वेवमित्यतिदेशेनैकैकलघ्वधिकेषु कृतेष्वेत एवाष्टौ भेदाः कामगणास्ते प्रत्येकं कामगणाख्या मात्रागणा स्मृताः। **प्रतिष्ठायास्त्विति**। प्रतिष्ठा नामाक्षरचतुष्टयात्मैकैकपादश्छन्दोविशेषस्तस्याः। **षोडश भेदा** इति। पूर्ववत्प्रस्तारे कृते चतुर्गुर्वादयश्चतुर्लघ्वन्ताः षोडश भेदा भवन्ति। तद्वदित्यतिदेशेनात्रापि द्वितीयादयः समसंख्याका अष्टौ लघुपूर्वा भेदा एकैकलघ्वधिकाः कृताश्चेत्,

यथा—ऽ ऽ; । ऽ; ऽ ।; ॥; इति रतिगणाः ॥
यथा—ऽ ऽ ऽ; । ऽ ऽ; ऽ । ऽ; ॥ ऽ; ऽ ऽ ।; । ऽ ।; ऽ ॥; । । ।; इति कामगणाः ॥
यथा—ऽ ऽ ऽ ऽ; । ऽ ऽ ऽ; ऽ । ऽ ऽ; ॥ ऽ ऽ; ऽ ऽ । ऽ; । ऽ । ऽ; ऽ । । ऽ; । । । ऽ; ऽ ऽ ऽ ।; । ऽ ऽ ।; ऽ । ऽ ।; । । ऽ ।; ऽ ऽ । ।; । ऽ । ।; ऽ । । ।; । । । ।; इति बाणगणाः ॥

तत्र वर्णगणैर्जाता गणैला परिकीर्तिता ।
सा भवेत्त्रिविधा शुद्धा संकीर्णा विकृता तथा ॥ ६६ ॥
शुद्धा चतुर्विधा नादावती हंसावती तथा ।
नन्दावती च भद्रावत्यथासां लक्ष्म कथ्यते ॥ ६७ ॥
गणादिनियमस्त्वासामङ्घ्रिखण्डद्वयाश्रयः ।
नादावती पञ्चभिर्भैर्नान्तैः स्याट्टक्कमण्ठयोः ॥ ६८ ॥
ऋग्वेदोत्था सिता विप्रा कैशिकीवृत्तिमाश्रिता ।
पाञ्चालीरीतिर्भारत्याः प्रीत्यै शृङ्गारवर्धनी ॥ ६९ ॥
इति नादावती ॥
रगणैः पञ्चभिः सान्तैः प्रोक्ता हंसावती बुधैः ।
द्वितीयताले हिन्दोले क्षत्त्रिया यजुरुद्भवा ॥ ७० ॥
लोहितारभटीं वृत्तिं लाटीं रीतिं च संश्रिता ।

षोडशापि प्रत्येकं बाणगणाख्या मात्रागणा भवन्ति । तत्र प्रथमोद्दिष्टां गणैलां सप्रभेदां लक्षयितुमाह—तत्र **वर्णगणैरित्यादिना**। वर्णगणाः पूर्वोक्ता मयरसतजभनास्ते नादावत्यादीनां शुद्धानां चतसृणां लक्षणेषु कैशिक्यादयश्चतस्रो वृत्तयः पाञ्चाल्यादयश्चतस्रो रीतयश्च क्रमेण योजिताः । तासां

रौद्रे रसे चण्डिकायाः प्रीतये विनियुज्यते ॥ ७१ ॥

इति हंसावती ॥

पञ्चभिस्तगणैर्जान्तैरेला नन्दावती मता ।
प्रतितालेन सा गेया रागे मालवकैशिके ॥ ७२ ॥
सामवेदोद्भवा पीता वैश्या सात्त्वतवृत्तिजा ।
गौडी च रीतिरिन्द्राण्याः प्रीत्यै वीररसाश्रया ॥ ७३ ॥

इति नन्दावती ॥

भद्रावती पञ्चभिर्मैर्यान्तैः कङ्कालतालतः ।
ककुभेऽथर्ववेदोत्था कृष्णा शूद्रा च भारतीम् ॥ ७४ ॥
वृत्तिं वैदर्भरीतिं च श्रिता बीभत्ससंभृता ।
वाराहीदेवताप्रीत्यै शार्ङ्गदेवेन कीर्तितः ॥ ७५ ॥

इति भद्रावती ॥

लक्षणानि संक्षिप्योच्यन्ते । तत्र वृत्तिर्नाम ;

'वाङ्मनःकायजा चेष्टा पुरुषार्थोपयोगिनी'

इति सामान्यलक्षणम् ।

"अत्यर्थसुकुमारार्थसंदर्भा कैशिकी मता ।
अत्युद्धतार्थसंदर्भा वृत्तिरारभटी स्मता ॥
ईषन्मृद्वर्थसंदर्भा भारती वृत्तिरिष्यते ।
ईषत्प्रौढार्थसंदर्भा सात्त्वती वृत्तिरिष्यते ॥" इति ।

तथा—

"रीतिर्नाम गुणाश्लिष्टपदसंघटना मता ।
पाञ्चाली रीतिर्वैदर्भी गौडीरित्युभयात्मिका ॥
लाटी समासानुप्रासप्राया तात्पर्यभेदभाक् ।
ओजःकान्तिगुणोपेता गौडीया रीतिरिष्यते ॥

**बहुधा संकरादासां संकीर्णा बहुधा मताः ।**
**अप्रसिद्धास्तु ता लक्ष्ये तेन नेह प्रपञ्चिताः ॥ ७६ ॥**

बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता ।
नातिदीर्घसमासा च वैदर्भीरीतिरिष्यते ॥"

इति च सामान्यलक्षणम् । पाञ्चालादिरीतीनां शब्दगुणाश्रितानामर्थविशेषनिरपेक्षतया केवलसंदर्भसौकुमार्यप्रौढत्वमात्रविषयत्वात्कैशिक्यादिभ्यो भेदोऽवगन्तव्यः ॥ ६३—७६ ॥

(सु०) वर्णगणानुक्त्वा मात्रागणानाह—मात्रा कलेति। मात्रा कला लघुर्लघुरित्यादिशब्दैर्मात्रोच्यते । तस्या गणाश्छगणः; पगणः; चगणः; तगणः, दगण इति । एताँल्लक्षयति—स्युरिति । षण्मात्रः (ऽऽऽ) छगणः; पञ्चमात्रः (ऽऽ।) पगणः; चतुर्मात्रः (ऽऽ) चगणः; त्रिमात्रः (ऽ।) तगणः; द्विमात्रः (ऽ) दगण इति । एतेषां च मात्रागणानां संज्ञान्तरमाह—अत्युक्ताया इति। अत्युक्ता द्विगुरुश्छन्दोजातिः; तस्याः प्रस्तारे ये चत्वारो भेदास्ते रतिगणा इत्युच्यन्ते । तेषु ये लघुपूर्वास्तेष्वादावधिको लघुर्दातव्यः। ते च भेदा यथा—ऽऽ; ।ऽ; ऽ।; ॥; इति । त्रिवर्णच्छन्दोजातिर्मध्या; तस्याः प्रस्तारे अष्टौ भेदास्ते कामगणा इत्युच्यन्ते। ते च भेदा यथा—ऽऽऽ; ।ऽऽ; ऽ।ऽ; ।।ऽ; ऽऽ।; ।ऽ।; ऽ।।; ।।।; इति । चतुर्वर्णजातिः प्रतिष्ठा; तस्याः प्रस्तारे षोडश भेदास्ते बाणगणा इत्युच्यन्ते। तद्वल्लघुपूर्वेषु लघुसंयुक्ताः कार्यास्ते च भेदा यथा—ऽऽऽऽ; ।ऽऽऽ; ऽ।ऽऽ; ।।ऽऽ; ऽऽ।ऽ; ।ऽ।ऽ; ऽ।।ऽ; ।।।ऽ; ऽऽऽ।; ।ऽऽ।; ऽ।ऽ।; ।।ऽ।; ऽऽ।।; ।ऽ।।; ऽ।।।; ।।।।; इति । तत्रेति। तत्र वर्णगणमात्रागणयोर्मध्ये वर्णगणैर्जाता गणैला उक्ता। सा च त्रिविधा—शुद्धा; संकीर्णा; विकृता चेति। तत्र शुद्धा चतुर्विधा—नादावती; हंसावती; नन्दावती; भद्रावतीति। गणादीति। वक्ष्यमाणो गणादिनियम आसां नन्दावत्यादीनामङ्घ्रौ खण्डद्वयसंबन्धी नियमो ज्ञातव्यः। खण्डद्वयानन्तरं पदेषु गणादिनियमो नास्ति। स्वेच्छया विरचनमित्यर्थः।

**शुद्धाः स्युर्विकृतास्तिस्र आद्या गणविकारतः ।**
**वासवी संगता श्रेता चतुरा बाणसंज्ञिका ॥ ७७ ॥**

नादावर्ती लक्षयति—नादावर्तीति । पञ्चभिर्भगणैरन्ते नगणेनान्वितैः प्रथमं खण्डद्वयं कर्तव्यम् । टक्करागः । मण्ठतालः । ऋग्वेदादुत्पत्तिः । शुभ्रो वर्णः । ब्राह्मणत्वं जातिः । वृत्तयो गीतयश्च नृत्ताध्याये वक्ष्यन्ते । तत्र कैशिकीं वृत्तिमाश्रिता । पाञ्चाली रीतिर्यस्याः सा पाञ्चालीरीतिः । सरस्वत्याः प्रीतिकारिणी । शृङ्गारो रसः । हंसावर्ती लक्षयति—रगणैरिति । पञ्चभी रगणैरन्ते सगणेनान्वितैः खण्डद्वये क्रियमाणे हंसावत्येला भवति । एतस्यां द्वितीयतालः । हिन्दोलो रागः । क्षत्रियत्वं जातिः । यजुर्वेदादुत्पत्तिः । लोहितो वर्णः । आरभटी वृत्तिः । लाटी रीतिः । रौद्रो रसः । चण्डिकायाः प्रीत्यै विनियोगः । नन्दावर्ती लक्षयति—पञ्चभिरिति । पञ्चभिस्तगणैरन्ते जगणेनान्वितैः खण्डद्वये क्रियमाणे नन्दावत्येला भवति । एतस्यां प्रतितालस्तालः । मालवकैशिको रागः । सामवेदादुत्पत्तिः । पीतो वर्णः । वैश्यत्वं जातिः । सात्त्वती वृत्तिः । गौडी रीतिः । इन्द्राण्याः प्रीत्यै विनियोगः । वीरो रसः । भद्रावर्ती लक्षयति—भद्रावतीति । पञ्चभिर्मगणैरन्ते यगणेनान्वितैः खण्डद्वये क्रियमाणे भद्रावत्येला भवति । एतस्यां कङ्कालस्तालः । ककुभो रागः । अथर्ववेदादुत्पत्तिः । कृष्णो वर्णः । शूद्रत्वं जातिः । भारती वृत्तिः । वैदर्भी रीतिः । बीभत्सो रसः । वाराह्याः प्रीत्यै विनियोगः । सर्वास्वप्यङ्घ्री खण्डद्वयमित्यादि पूर्वोक्तसामान्यलक्षणं ज्ञातव्यम् । विशेषमात्रमत्रोक्तमिति । जातिकल्पनं च तत्तज्जातीयस्यात्र यो ऽतिशयो विधातृत्वप्रतिपादनार्थम् । बहुधेति । आसां लक्षणसंकरात्संकीर्णा बहवो भेदा भवन्ति । ते लक्ष्येऽप्रसिद्धत्वान्नोक्ताः ॥ ६३—७६ ॥

(क०) **शुद्धाः स्युर्विकृतास्तिस्र** इत्यादि । आद्यास्तिस्रो नादावर्ती हंसावती नन्दावती च गणविकारतः शुद्धावस्थायां स्वस्वोक्तगणानां विकारतो ऽन्यथाभावात् । अन्यथाभावश्च प्रकृतगणस्थितगुरुलघुविपर्यासेन प्रकृतगणस्य गणान्तरत्वप्राप्तिः । तत्र नादावत्यां भगणस्य विकाराज्जगणो वा सगणो वा

एकद्वित्रिचतुष्पञ्चविकारात्पञ्चधेति ताः ।
प्रत्येकं वासवी पञ्चविधा रामा मनोरमा ॥ ७८ ॥
उन्नता शान्तिसंज्ञा च नागरेत्युच्यते बुधैः ।
गणानां प्रथमादीनां विकारात्पञ्चमावधि ॥ ७९ ॥
रमणीया च विषमा समा लक्ष्मीश्च कौमुदी ।
कामोत्सवा नन्दिनी च गौरी सौम्या ततः परम् ॥ ८० ॥
रतिदेहेति दशधा संगता गदिता बुधैः ।

भवति । हंसावल्यां रगणस्य विकाराद्यगणो वा त्रगणो वा भवति । नन्दावल्यां तगणस्य विकाराद्यगणो वा रगणो वा भवति । **एकद्वित्रिचतुष्पञ्चविकारादिति** । तत्र नादावल्यां तावत्पञ्चसु गणेषु मध्ये एकभगणविकारे सति वासवी नाम विकृता भवति । भगणद्वयविकारे संगता नाम । भगणत्रयविकारे त्रेता नाम । भगणचतुष्टयविकारे चतुरा नाम । भगणपञ्चकविकारे बाणसंज्ञिका । प्रत्येकमिति पूर्वेण संबन्धः । नादावती हंसावती नन्दावती चेत्यर्थः । **वासवी पञ्चविधेत्यादि** । **गणानां प्रथमादीनां विकारात्पञ्चमावधीति** । तत्र प्रथमगणविकाराद्रामा नाम वासवीभेदः ; द्वितीयगणविकारान्मनोरमा ; तृतीयगणविकारादुन्नता ; चतुर्थगणविकाराच्छान्तिः ; पञ्चमगणविकारान्नागरेति च क्रमेण योजनीयम् । पञ्चमावधीत्यनेनान्तिमस्य गणस्य विकारनिषेधो गम्यते । तस्यापि विकारे हि नादावल्यादीनां प्रत्यभिज्ञैव न भवेदिति भावः । तस्माद्यः पूर्वं जातिषु 'विकृता न्यासवर्ज्यैतल्लक्ष्महीना भवन्त्यमूः' इत्यत्र न्याय उक्तः ; सोऽत्राप्यनुसंधेयः । यद्यपि नादावल्यामन्तिमस्य गणस्य विकारो न संभवत्येव ; तथापि हंसावतीनन्दावत्योः सगणजगणयोरन्तिमयोर्विकारसंभवात्तत्प्रतिषेधार्थं सामान्ये-

आद्यस्य स्युर्द्वितीयादिसहितस्य विकारतः ॥ ८१ ॥
चतस्रस्ता द्वितीयस्य तृतीयादियुजस्त्रयम् ।
विकारेण तृतीयस्य चतुर्थादियुजो द्वयम् ॥ ८२ ॥
तुर्यपञ्चमयोस्त्वेका लक्ष्म तासां क्रमादिति ।

नोक्तमिति मन्तव्यम् । **रमणीयेत्यादि** । **आद्यस्य स्युर्द्वितीयादिसहितस्य विकारतः, चतस्र** इति । आद्यद्वितीययोर्भगणयोर्विकाराद्रमणीया नाम संगताभेदः ; आद्यतृतीययोर्विकाराद्विषमा ; आद्यचतुर्थयोर्विकारात्समा ; आद्यपञ्चमयोर्विकाराल्लक्ष्मीरिति चतस्रः । **द्वितीयस्य तृतीयादियुजस्त्रय**मिति । द्वितीयतृतीययोर्विकारात्कौमुदी ; द्वितीयचतुर्थयोर्विकारात्कामोत्सवा ; द्वितीयपञ्चमयोर्विकारान्नन्दिनीति तिस्रः । **विकारेण तृतीयस्य चतुर्थादियुजो द्वय**मिति । तृतीयचतुर्थयोर्विकारेण गौरी ; तृतीयपञ्चमयोर्विकारेण सौम्येति द्वे । तुर्यपञ्चमयोर्विकाराद्रतिदेहा ; एवं दश संगताभेदाः ॥ ७७—८२ ॥

(सु०) विकृतान्निरूपयति—**शुद्धाः स्युरिति** । शुद्धायास्तिस्रः नादावतीहंसावतीनन्दावत्यः पूर्वोक्ता गणविकारतो विकृता भवन्ति । तासां प्रत्येकं पञ्च भेदा भवन्ति । एकगणविकाराद्वासवी ; गणद्वयविकारात्संगता ; गणत्रयविकारात्त्रेता ; गणचतुष्टयविकाराच्चतुरा ; गणपञ्चकविकाराद्घ्राणेति । तत्र वासव्या भेदान्कथयति—**प्रत्येकमिति** । वासवी पञ्चप्रकारा ; प्रथमगणविकाराद्रामा ; द्वितीयगणविकारान्मनोरमा ; तृतीयगणविकारादुन्नता ; चतुर्थगणविकाराच्छान्तिः ; पञ्चमगणविकारान्नागरेति । गणद्वयविकारवत्याः संगताया भेदान्कथयति—**रमणीयेति** । संगता दशप्रकारा भवति । तदेव दशविधत्वं स्फुटयति—**आद्यस्येति** । प्रथमस्य गणस्य द्वितीयस्य तृतीयचतुर्थपञ्चमगणसहितस्य विकारेण चत्वारो भेदाः; द्वितीयगणस्य तृतीयचतुर्थपञ्चमगणसहितस्य विकारेण त्रयो भेदाः ; तृतीयस्य गणस्य चतुर्थपञ्चमगणसहितस्य द्वौ भेदौ ; विकारेणाष्टौ भेदाः ; चतुर्थपञ्चमगणविकारेणैको भेदः । तासां रमणीयादीनां दशानामेवंविधं लक्षणम् ।

त्रेता दशविधा प्रोक्ता मङ्गला रतिमङ्गला ॥ ८३ ॥
कलिका तनुमध्या च वीरश्रीर्जयमङ्गला ।
विजया रत्नमाला च गुरुमध्या रतिप्रभा ॥ ८४ ॥
आद्याक्षरेण ग्रहणं प्रथमादेरिहेष्यते ।
प्रद्वित्रिणां प्रद्विचानां प्रद्विपानां प्रचत्रिणाम् ॥ ८५ ॥
प्रतृपाणां प्रचपानां द्वितृचानां द्विपत्रिणाम् ।
द्विचपानां तृचपानां विकृतेः स्युः क्रमादिमाः ॥ ८६ ॥
त्यक्त्वैकैकं गणं त्वाद्याच्चतुर्णां स्याद्विकारतः ।
चतुरा पञ्चधा तत्र प्रथमा तूत्सवप्रिया ॥ ८७ ॥

ततश्चायमर्थः—प्रथमद्वितीयगणविकारेण रमणीया; प्रथमतृतीयगणविकारेण विषमा; प्रथमचतुर्थगणविकारेण समा; प्रथमपञ्चमगणविकारेण लक्ष्मीः; द्वितीयतृतीयगणविकारेण कौमुदी; द्वितीयचतुर्थगणविकारेण कामोत्सवा; द्वितीयपञ्चमगणविकारेण नन्दिनी; तृतीयचतुर्थगणविकारेण गौरी; तृतीयपञ्चमगणविकारेण सौम्या; चतुर्थपञ्चमगणविकारेण रतिदेहेति ॥ -७७—८२- ॥

(क०) **त्रेता दशविधेत्यादि**। प्रद्वित्रिणां प्रथमद्वितीयतृतीयाणां भगणानां विकृतेर्मङ्गला नाम त्रेताभेदः; प्रद्विचानां विकृते रतिमङ्गला; प्रद्विपानां विकृतेः कलिका; प्रचत्रिणां विकृतेस्तनुमध्या; प्रतृपाणां विकृतेर्वीरश्रीः; प्रचपानां विकृतेर्जयमङ्गला; द्वितृचानां विकृतेर्विजया; द्विपत्रिणां विकृते रत्नमाला; द्विचपानां विकृतेर्गुरुमध्या; तृचपानां विकृते रतिप्रभेति क्रमोऽनुसंधेयः। **त्यक्त्वैकैकमित्यादि**। आद्यादिति ल्यब्लोपे पञ्चमी। आद्यमारभ्येत्यर्थः। एकैकं गणं त्यक्त्वा विकृतमकृत्वेत्यर्थः। चतुर्णां पञ्चसु मध्ये त्यक्त्वा तदन्येषां चतुर्णां विकारतश्चतुरा पञ्चधा भवति। तत्राद्यं भगणं त्यक्त्वा द्वितीयादीनां चतुर्णां विकारादुत्सवप्रिया नाम चतुराभेदः; द्वितीयं त्यक्त्वेतरगणविकारान्महानन्दा; तृतीयं त्यक्त्वेतरगणविकाराल्लहरी; च-

महानन्दाथ लहरी जया च कुसुमावती ।
आद्यात्पञ्च विकारेण बाणा स्यात्पार्वतीप्रिया ॥ ८८ ॥
प्रत्येकमेकत्रिंशत्ते नादावत्यादिषु स्थिताः ।
भेदास्त्रिनवतिर्युक्ता अन्ये पञ्चदश त्विमे ॥ ८९ ॥
सावित्री पावनी वातसावित्री त्रिविधा मता ।
संगता सवितुः क्षिप्ते पवनस्य गणे क्रमात् ॥ ९० ॥
द्वितीये चाद्यभेदाभ्यां द्विविधा वासवती मता ।
नादावत्यामिमे भेदा हंसावत्यामपि त्रिधा ॥ ९१ ॥

तुर्थं त्यक्त्वेतरगणविकाराज्जया ; पञ्चमं त्यक्त्वेतरगणविकारतः कुसुमावतीति । **आद्यात्पञ्चेत्यादि** । आद्यमारभ्य पञ्चानां गणानां विकारेण **पार्वतीप्रिया** नाम बाणसंज्ञिता । **प्रत्येकमेकत्रिंशदिति** । यथा भगणविकारान्नादावती-भेदास्तथा रगणविकाराद्धंसावतीभेदा एकत्रिंशत् । तथा तगणविकारान्नन्दा-वतीभेदा अप्येकत्रिंशत् । **अन्ये पञ्चदश त्विमे** इति । अन्य उक्तेभ्यस्त्रि-नवतिभेदेभ्योऽन्ये त्विमे वक्ष्यमाणाः । नादावत्यां तावद्गणद्वयविकारवती संगता भगणद्वयस्य स्थाने सवितुर्गणे सवितृदेवताके जगणे क्षिप्ते भगण-विकारत्वेन जगणद्वये न्यस्त इत्यर्थः । तदा सावित्री नाम संगताभेदः । तथा पवनस्य गणे सगणे पूर्ववत्क्षिप्ते सति पावनी नाम संगताभेदः । **द्वितीये चेति** । एकस्य भगणस्थाने सगणे न्यस्ते द्वितीयभगणस्थाने जगणे च क्षिप्ते वातसावित्री नाम संगताभेदः । **आद्यभेदाभ्यां द्विविधा वासवी मतेति** । एकगणविकारवती वासवी यदा भगणविकारत्वेन जगणवती स्यात्तदा सावित्री नाम वासवीभेदः । यदा तु सगणवती तदा पावनी नाम वासवी-भेदः । वासव्यां गणद्वयविकाराभावात्तृतीयभेदाभावो द्रष्टव्यः । एवं नादावत्यां विकृतभेदाः पञ्च । **हंसावत्यामपि त्रिधेति** । हंसावत्यां रगण-

व्योमजा वारुणी व्योमवारुणी चेति संगता ।
तद्दैवत्यगणोपेता तदा स्याद्वासवी द्विधा ॥ ९२ ॥
नन्दावत्यां वह्निजा च वारुणी वह्निवारुणी ।
तद्गणैः संगता त्रेधा तथा द्वेधा च वासवी ॥ ९३ ॥
इत्येता विकृता भेदा अष्टोत्तरशतं मतम् ।

द्वयस्थाने तगणद्वये क्षिप्ते व्योमजा नाम संगताभेदः ; तस्मिन्नेव यगणद्वये क्षिप्ते वारुणी नाम संगताभेदः ; द्वयोः स्थाने द्वितये च क्षिप्ते व्योमवारुणी नाम संगताभेद इति । **तद्दैवत्यगणोपेतेति** । व्योमगणेन वरुणगणेन व्योमवरुणगणाभ्यां चेत्यर्थः । **तदा स्याद्वासवी द्विधेति** । हंसावत्यां वासवी व्योमजा वारुणीति भेदद्वयवतीत्यर्थः । **नन्दावत्यां वह्निजेत्यादि** । पूर्ववदनुसंधेयम् । भद्रावत्यास्तु सगणात्मकत्वान्मगणस्य विकारासंभवाद्विकृतभेदाभाव इति ग्रन्थकाराभिप्रायो बोद्धव्यः । **इत्येत इति** । एभिः पञ्चदशभेदैः सह गणैलाया अष्टोत्तरशतं विकृतभेदाः ॥ -८२—९३- ॥ इति पार्वतीमताद्गणैलालक्षणम् ॥

(सु०) गणत्रयविकारवत्यास्त्रेतायाः भेदानाह—**त्रेता दशविधेति** । त्रेता दशप्रकारा भवति । तानेव प्रकारान्कथयितुं परिभाषते—**आद्याक्षरेणेति** । **प्रद्वित्रिणामिति** लक्षणे—प्रथमद्वितीयतृतीयगणविकारेण मङ्गला ; प्रथमद्वितीयचतुर्थगणविकारेण रतिमङ्गला ; प्रथमद्वितीयपञ्चमगणविकारेण कलिका ; प्रथमतृतीयचतुर्थगणविकारेण तनुमध्या ; प्रथमतृतीयपञ्चमगणविकारेण वीरश्रीः ; प्रथमचतुर्थपञ्चमगणविकारेण जयमङ्गला ; द्वितीयतृतीयचतुर्थगणविकारेण विजया ; द्वितीयतृतीयपञ्चमगणविकारेण रत्नमाला ; द्वितीयचतुर्थपञ्चमगणविकारेण गुरुमध्या ; तृतीयचतुर्थपञ्चमगणविकारेण रतिप्रभेति क्रमो ऽनुसंधेयः । चतुर्गणविकारवत्याश्चतुरायाः भेदान्निरूपयितुमाह—**त्यक्त्वैकैकमिति** । आद्यादृणादेकैकं विहाय चतुर्णां विकाराच्चतुरायाः पञ्च भेदा भवन्ति । द्वितीयतृतीयचतुर्थपञ्चमगणविकारेणोत्सवप्रिया ; प्रथमतृतीयचतुर्थपञ्चमगणविकारेण महानन्दा ; प्रथमद्वितीय-

मात्रागणैस्तु मात्रैला सा च ज्ञेया चतुर्विधा ॥ ९५ ॥
रतिलेखा कामलेखा बाणलेखा तथापरा ।
चन्द्रलेखेति तत्राद्ये पादे रुद्राः कला यदि ॥ ९६ ॥
द्वितीये च तृतीये तु मात्रा दश तथा भवेत् ।

(क०) मात्रैलां सप्रभेदां लक्षयितुमाह—**मात्रागणैस्त्वित्यादि** । **तत्राद्य** इति । तत्र रतिलेखादिषु चतसृषु मात्रैलादिषु मध्य आद्यपादे पञ्चपदात्मक उद्ग्राहावयवे; प्रथमपादे रुद्राः कला एकादश मात्राः । **द्वितीये चेति** । तादृशे द्वितीये पादे; चकारेणात्राप्येकादश कलाः समुच्ची-

चतुर्थगणविकारेण लहरी; प्रथमद्वितीयतृतीयपञ्चमगणमविकारेण जया; प्रथमद्वितीयतृतीयचतुर्थगणविकारेण कुसुमावतीति पञ्चानामपि गणविकारेण बाणा स्यात् । एवमेकस्यैलाया एकत्रिंशद्भेदाः । तिसृणां मेलनात्त्रिनवतिः । अन्यान्विकृतभेदानाह—अन्य इति । अन्ये विकृताः पञ्चदश भेदा भवन्ति । तत्र नादावल्याः पञ्च । हंसावल्याः पञ्च । नन्दावल्याः पञ्च । तानेव भेदानाह—**सावित्रीति** । संगता गणद्वयविकारवत्यैला त्रिधा; सावित्री, पावनी, वातसावित्री चेति । तत्र सवितुः सूर्यस्य गणे जगणे योजिते सति सावित्री; पवनस्य गणे सगणे योजिते सति पावनी; उभयोर्गणयोर्निक्षिप्तयोर्वातसावित्री । वासवी एकगणविकारवती जगणे क्षिप्ते सति सावित्री; सगणे क्षिप्ते पावनीत्येवं द्विप्रकारा। एवं नादावल्याः पञ्च भेदा विकृता भवन्ति; हंसावल्यामपि संगता त्रिविधा; व्योमजा वारुणी व्योमवारुणीति । तत्र व्योमदैवत्ये तगणे निक्षिप्ते व्योमजा; वारुणे यगणे निक्षिप्ते वारुणी; तगणयगणोभयोर्गणयोर्निक्षिप्तयोर्व्योमवारुणीति । वासवी एकगणविकारवत्यपि तगणे निक्षिप्ते व्योमजा; यगणे निक्षिप्ते वारुणीति द्विविधा । एवं हंसावल्याः पञ्च भेदाः; नन्दावल्यामपि पञ्च भेदा भवन्ति; संगता त्रिविधा वह्निजा, वारुणी, वह्निवारुणी चेति । वासवी द्विविधा; वह्निगणे रगणे क्षिप्ते वह्निजा; यगणे क्षिप्ते वारुणी; उभयोर्गणयोर्निक्षिप्तयोर्वह्निवारुणीति। अन्त्यं भेदद्वयं वासव्यामुक्तम् । इत्येवं पञ्चदश भेदाः, पूर्वे च त्रिनवतिः; मिलिता अष्टोत्तरशतं भेदा भवन्ति ॥ -८३—९४- ॥ इति पार्वतीमतादर्णैलालक्षणम् ॥

रतिलेखा रतिगणैः कामलेखा तु मान्मथैः ॥ ९७ ॥
द्विगुणाभिः कलाभिः स्यान्मात्रात्रैगुण्यतो भवेत् ।
बाणलेखा बाणगणैश्चन्द्रलेखा तु मिश्रितैः ॥ ९८ ॥
गणैश्चतुर्गुणकलाश्चतस्रो ऽन्या ब्रुवे ऽधुना ।
आद्येन्दुमत्यथो ज्योतिष्मती पश्चान्नभस्वती ॥ ९९ ॥
वसुमत्यपि तत्रेन्दुमती च्छैः पञ्चभिः सतैः ।

यन्ते । **तृतीये त्विति** । पदद्वयात्मके तृतीये पादे ; तुशब्दो ऽत्र पादद्वयाद्विशेषं दर्शयति । स विशेषोऽत्र मात्रा दशेति तथा भवेदित्युत्तरेण संबन्धः । तथा पादत्रयोक्तमात्रासंख्यया रतिगणैरुक्तविशेषैरत्युक्ताभेदैः । रतिगणैरितीत्थंभूतलक्षणे तृतीया । तत्र यैर्मिलितैः प्रथमद्वितीययोः पादयोः प्रत्येकमेकादश मात्राः ; तृतीये तु दश मात्राः संमिता भवन्ति ; तैरित्यर्थः । रतिलेखा भवेदिति योजना । **कामलेखा त्वित्यादि** । **द्विगुणाभिः कलाभिरिति** । रतिलेखोक्तमात्रासंख्यापेक्षया प्रथमद्वितीययोः पादयोः प्रत्येकं द्वाविंशत्या मात्राभिस्तृतीये तु विंशत्या मात्राभिरित्यर्थः । ताभिर्निष्पन्नैर्मान्मथैः कामगणैः पूर्वोक्तैर्मध्याभवैर्भेदैर्यथायोगं योजितैः कामलेखा स्यात् । **मात्रात्रैगुण्यत** इत्यादि । रतिलेखापेक्षया प्रथमद्वितीययोः पादयोः प्रत्येकं त्रयस्त्रिंशता मात्राभिस्तृतीये पादे त्रिंशन्मात्राभिरित्यर्थः । बाणगणैः पूर्वोक्तैः प्रतिष्ठाभेदैर्यथायोगं योजितैर्बाणलेखा भवेत् । **चन्द्रलेखा त्वित्यादि** । **मिश्रितैर्गणैरिति** । रतिकामबाणपूर्वैः पूर्वोक्तमात्रासंख्यानुगुण्येन योजितैरित्यर्थः । **चतुर्गुणकलेति** । रतिलेखापेक्षयात्रापि चतुर्गुणत्वम् । तेन प्रथमद्वितीययोः पादयोः प्रत्येकं चतुश्चत्वारिंशन्मात्रायुक्ततृतीये पादे चत्वारिंशन्मात्रायुक्ता चन्द्रलेखा भवतीत्यर्थः । **नन्दिमतादन्यां मात्रैलां लक्षयितुमाह—चतस्रो ऽन्या** इत्यादि । **सतैरिति** । तगणेन सहितैः ; तगणोऽत्र मात्रात्रयात्मको

पञ्चभिः पैः सचगणैराहुर्ज्योतिष्मतीं बुधाः ॥ १०० ॥
त्रिभिश्चैः पगणेनापि च्छाद्यन्ता स्यान्नभस्वती ।
सा स्याद्वसुमती यस्यां दपचाः पत्रयं छतौ ॥ १०१ ॥

मात्रागणः । तस्याप्रधानत्वादन्ते निवेशः कर्तव्यः । छैश्चगणैः षण्मात्रात्मकैर्मात्रागणैरिन्दुमती नाम मात्रैला भवति । **पञ्चभिः पैरिति** । पैः पगणैः पञ्चमात्रात्मकैर्मात्रागणैः; सचगणैः, चगणोऽत्र चतुर्मात्रात्मको मात्रागणस्तेन सहितैः; ज्योतिष्मतीनाम मात्रैलामाहुर्बुधा **मतङ्गादयः** । छाद्यन्ता, आदौ छगण एकः; ततश्चगणास्त्रयः; ततः पगण एकः; अन्ते छगणश्च; एतैर्युक्ता नभस्वती स्यात् । **सा स्यादिति** । यस्यां दपचा दगणपगणचगणाः । दगणो मात्राद्वयात्मकः, पत्रयं पगणत्रयं छतौ छगणतगणौ च क्रमेण भवन्ति चेत्सा वसुमती स्यात् ॥ इति नन्दिमतान्मात्रैलाः ॥ -९५—१०१ ॥

(सु०) मतान्तरेण मात्रैलां लक्षयति—मात्रागणैस्त्विति । मात्रागणैः पूर्वोक्तैश्छपचादिभिर्विरचिता मात्रैला । सा चतुर्विधा—रतिलेखा, कामलेखा, बाणलेखा, चन्द्रलेखेति । तत्र रतिलेखां लक्षयति—तत्रेति । एलाया उद्ग्राहे पादत्रयमित्युक्तम् । तत्र प्रथमे पादे रुद्रा एकादश; कला मात्रा भवन्ति । द्वितीये पादे चैकादश; तृतीये पादे दश; एवं पूर्वोक्तै रतिगणैरेव मात्रासंख्यापरिपूर्तिस्तदा रतिलेखा । कामलेखां लक्षयति—कामलेखा त्विति । मान्मथे कामगणे पूर्वोक्ते कलाद्वैगुण्यं कर्तव्यमित्युक्तम् । तत्र प्रथमे पादे द्वितीये च द्वाविंशतिः कलाः; तृतीये तु विंशतिः; एवं पूर्वोक्तैर्मगणैरेव मात्रासंख्यापरिपूर्तिस्तदा कामलेखा । बाणलेखां लक्षयति—मात्रात्रैगुण्यत इति । प्रथमे पादे द्वितीये च त्रयस्त्रिंशत्कलाः; तृतीये तु त्रिंशत्, एवं पूर्वोक्तैर्मगणैरेव संख्यापूर्तिस्तदा बाणलेखा । चन्द्रलेखां लक्षयति—चन्द्रलेखा त्विति । मिश्रितै रतिगणैः कामगणैर्बाणगणैश्चतुर्गुणाभिर्मात्राभिश्चन्द्रलेखा । प्रथमे पादे द्वितीये च चतुश्चत्वारिंशत्कलाः, तृतीये तु चत्वारिंशदिति । अथान्याश्चतस्रो मात्रैलां लक्षयति—

**नादावल्यादयो मात्राश्चाद्यैः स्वगणभङ्गजैः ।**
**गणाः पञ्च त्रिमात्रोऽन्ते गणः सप्तान्तिमो लघुः १०२ ॥**

(क०) अर्जुनमतान्मात्रैलां लक्षयितुमाह—**नादावल्यादय** इत्यादि। मात्रा मात्रैलाः; पूर्वं गणैलात्वेनोक्ता नादावल्यादय एव मात्रैला भवन्तीत्यर्थः। कथमित्याकाङ्क्षायामाह—**स्वगणभङ्गजैश्चाद्यैरिति**। स्वगणभङ्गजैः, स्वासां गणा इति तत्पुरुषः; स्वे च ते गणाश्चेति कर्मधारयो वा। यथा नादावल्यां भगणाः पञ्च; अन्ते नगणः। हंसावल्यां रगणाः पञ्च; अन्ते सगणः। नन्दावल्यां तगणाः पञ्च; अन्ते जगणः। भद्रावल्यां सगणाः पञ्च; अन्ते यगण इति; एते स्वगणास्तेषां भङ्गः। भङ्गो नामात्र ये गुरवस्तेषामेकैकस्य गुरोः पृथग्लघुद्वयात्मकतया प्रयोगः। तस्माज्जातैश्चाद्यैः, चकाराद्यैश्चगणैरित्यर्थः। चाद्यैरितीत्थंभूतलक्षणे तृतीया। तैर्लक्षिता इत्यर्थः। तानि लक्षणानि दर्शयति—**गणाः पञ्चे**त्यादिना। **तासामिति**। नादावल्यादीनां मात्रैलानाम्। **क्रमाल्लक्ष्माणी**ति। नादावल्या भगणेषु भग्नेष्वन्त्येन नगणेन सह त्रयोविंशतिर्लघवो भवन्ति। तत्र चतुर्मात्रात्मकांश्चगणान्कृत्वा तद्गणनायां कृतायां गणाश्चगणाः पञ्च। अन्ते त्रिमात्रस्तिसृणां मात्राणां

चतस्र इति। इन्दुमत्यादयश्चतस्रो मात्रैला भवन्ति। तत्रेन्दुमतीं लक्षयति—**छैःपञ्चभिरिति**। षड्भिश्छगणैः, पञ्चभिः पगणैरन्ते तगणेनान्विते खण्डद्वये क्रियमाणे इन्दुमती। ज्योतिष्मतीं लक्षयति—**पञ्चभिरिति**। पञ्चभिः पगणैः, पञ्चमात्रागणैरन्ते चगणेनान्विते खण्डद्वये क्रियमाणे ज्योतिष्मती। नभस्वतीं लक्षयति—**त्रिभिरिति**। एकश्छगणः, ततश्चगणास्त्रयः, ततःपगण एकः, अन्ते छगणेनान्विते खण्डद्वये क्रियमाणे नभस्वती। वसुमतीं लक्षयति—सा स्यादिति। एको दगणः, स च मात्राद्वयात्मकः, पः पञ्चमात्रागणः, चश्चतुर्मात्रा गणः, पत्रयं पञ्चमात्रागणत्रयम्, छः षण्मात्रागणः, तस्त्रिमात्रागणः, एतैरङ्ग्री खण्डद्वये क्रियमाणे वसुमतीति॥ -९९—१०१॥ इति नन्दिमतान्मात्रैलाः॥

**गणाः सप्त लघुश्चान्ते त्रिमात्रो ऽन्ते गणाष्टकः ।**
**लक्ष्माणीति क्रमात्तासामित्यूचे सव्यसाचिना ॥ १०३ ॥**
**एकद्वित्रिचतुष्पञ्चमात्रावृद्धिर्यदाङ्घ्रिषु ।**
**तदा विचित्रमात्रैलां तां जगाद धनंजयः ॥ १०४ ॥**

समाहारो ऽत्र विवक्षितः । न तु प्लुतः । सर्वेषां लघुरूपत्वात् । एवं चेत्तदा नादावल्या नाम मात्रैलाया लक्षणम् । **गणाः सप्तेति** । हंसावल्याः सगणान्तेषु रगणेषु भग्नेष्वेकोनत्रिंशल्लघवो भवन्ति । पूर्ववद्गणनायां चगणाः सप्त, अन्तिमो लघुरेकस्तदा हंसावल्या लक्षणम् । पुनरपि । **गणाः सप्तेति** । नन्दावल्या जगणान्तेषु तगणेषु भग्नेषु मात्रागणसंख्या पूर्ववदेव । एतन्नन्दावल्या लक्षणम् । **त्रिमात्रो ऽन्ते गणाष्टक** इति । भद्रावल्यां पगणान्तेषु सगणेषु भग्नेषु पञ्चत्रिंशल्लघवो भवन्ति । पूर्ववद्गणनायामष्टौ चगणाः । अन्ते त्रिमात्र इति भद्रावल्यालक्षणमिति क्रमोऽनुसंधेयः । **अर्जुनमतादेव** भेदान्तराणि दर्शयितुमाह—**एकद्वित्रीत्यादिना** । नादावल्यादिसंज्ञा मात्रैला एकादिपञ्चान्तं यथेष्टं मात्रावृद्धौ कृतायां विचित्रमात्रैला विचित्रमात्रोपपदा इत्यर्थः ॥ १०२—१०४ ॥ इत्यर्जुनमतान्मात्रैलाः ॥

(सु०) अर्जुनमतादन्या मात्रैलाः कथयति—**नादावल्यादय** इति । नादावल्यादयश्चतस्रो मात्रा नादावलीत्यादिसंज्ञावत्यो भवन्ति । स्वगणाः स्वोक्ता गणाः, तेषां भङ्गः, भङ्गो नामात्र ये गुरवस्तेषामेकैकस्य गुरोः पृथग्लघुद्वयात्मकतया प्रयोगः । तस्माज्जातैश्चाद्यैः चकाराद्यैश्चतुर्मात्रिकैर्गणैर्निक्षिप्तैरित्यर्थः । तेषामेव गणानां संख्यां नियमयति—**गणा** इति । पञ्च चगणाः, अन्ते त्रिमात्रो गणः, भङ्ग्यौ खण्डद्वयं चेत्तदा मात्रा नादावती । सप्त चगणः, अन्ते लघुस्तदा मात्रा हंसावती । सप्त चगणाः, अन्ते लघुस्तदा मात्रा नन्दावती । अष्टौ चगणाः, अन्ते त्रिमात्रो गणस्तदा मात्रा भद्रावतीति । इदं सव्यसाचिना अर्जुनेनोक्तम् । एता एव केनचिद्विशेषेण संज्ञान्तरवत्यो भवन्तीत्याह—**एकेति** । एतासामङ्घ्रि-

**नन्दिनी चित्रिणी चित्रा विचित्रेत्यभिधानतः ।**
**रतिलेखादयः प्रोक्ताः क्रमादनियतैर्गणैः ॥ १०५ ॥**
**एलयोराद्ययोरङ्घ्री व्यत्यस्तावयुजाविह ।**

ष्वेका मात्रा द्वे तिस्रश्चतस्रः पञ्च वा मात्रा यदाधिकाः क्षिप्यन्ते तदैता एव मात्रा नादावल्यादयो विचित्रा मात्रैला भवन्तीत्याह—विचित्रेति । धनंजयो ऽर्जुनः ॥ ॥ १०२—१०४ ॥ इत्यर्जुनमतान्मात्रैलाः ॥

(क०) मतान्तरेणान्याश्चतस्रो मात्रैला लक्षयितुमाह—**नन्दिनी चित्रिणीत्यादि** । **रतिलेखादय** इति । पूर्वोक्ता रतिलेखादय एवानियतैर्गणैः, पूर्वोक्तगणनियमं विहाय केवलं तत्तन्मात्रासंख्यया युक्ताश्चेत्क्रमेण नन्दिन्याद्यभिधानतः प्रोक्ता इति संबन्धः । तासु कंचिद्विशेषान्तरं दर्शयति—**एलयोराद्ययोरि**ति । इह चतसृषु मध्य आद्ययोरेल्यो रतिलेखाकामलेखयोः; अयुजावङ्घ्री प्रथमतृतीयपादौ व्यत्यस्तौ भवत इति । रतिलेखायां प्रथमे विंशतिर्मात्रास्तृतीये द्वाविंशतिर्मात्राः कर्तव्या इति । एतास्वपि विंशतौ मात्रैलासु मात्रागणनियमो ऽङ्घ्रिखण्डद्वयाश्रयः कर्तव्य इत्यनुषञ्जनीयम् । अङ्घ्रिखण्डद्वयाश्रय इति, अङ्घ्रिषु त्रिषु पादेषु खण्डद्वयात्मकानि पदानि कामविकारिगीतसंज्ञकानि त्रीणि, तान्येवाश्रयो यस्येति तथोक्तः । तत्रैकैकखण्डान्वितः कर्तव्य इत्यर्थः ॥ १०५- ॥ इति मात्रैलालक्षणम् ॥

(सु०) अन्याश्चतस्रो मात्रैला लक्षयति—नन्दिनीति । अनियतैर्गणैर्युक्ता पूर्वोक्ता रतिलेखा नन्दिनीत्युच्यते । कामलेखा चित्रिणीत्युच्यते । बाणलेखा चित्रेति । आद्ययोर्विशेषमाह—एलयोरिति । आद्ययोर्नन्दिनीचित्रिण्योरेलयोरयुजौ प्रथमतृतीयावङ्घ्री व्यत्यस्तौ विपर्यासेन गेयौ । तृतीयो ऽङ्घ्रिः पूर्वं गेयः । प्रथमश्च तृतीयस्थान इति । इति विंशतिर्मात्रैलाः ॥ १०५- ॥ इति मात्रैलालक्षणम् ॥

गणमात्राद्यनियता वर्णैला वर्णसंख्यया ॥ १०६ ॥
षडक्षरादङ्घ्रिखण्डादेकोनत्रिंशदक्षरम् ।
यावदेकैकवृद्ध्यैलाश्चतुर्विंशतिरीरिताः ॥ १०७ ॥
प्रथमा मधुकर्युक्ता सुस्वरा करणी ततः ।
चतुर्थी सुरसा प्रोक्ता पञ्चमी तु प्रभञ्जनी ॥ १०८ ॥
षष्ठी मदनवत्युक्ता शशिनी च प्रभावती ।
मालती ललिताख्या च मता भोगवती ततः ॥ १०९ ॥
ततः कुसुमवत्याख्या कान्तिमत्यपरा भवेत् ।
ततः कुमुदिनी ख्याता कलिका कमला तथा ॥ ११० ॥
विमला नलिनी संज्ञा कालिन्दी विपुला ततः ।
विद्युल्लता विशाला च सरला तरलेति ताः ॥ १११ ॥
तत्रान्त्या वर्णमात्रैला द्वादशेत्यपरे जगुः ।
मण्ठद्वितीयकङ्कालप्रतितालेषु कश्चन ॥ ११२ ॥
तालस्तासु विधातव्यो रागादिनियमो न तु ।

(क०) अथ वर्णैलां लक्षयितुमाह—**गणमात्राद्यनियतेत्यादि** । वर्णसंख्यया वर्णानां गुरुलघुरूपाणामक्षराणां संख्यया । **यावदेकैकवृद्ध्येति** । यावत्पदस्यैकोनत्रिंशदक्षरमिति पूर्वेण संबन्धः । एकैकवृद्ध्या एकैकोत्तरवृद्ध्या । **प्रथमा मधुकरीति** । प्रत्येकं प्रथमा षडक्षराङ्घ्रिद्वयवती वर्णैला मधुकरीनाम । एवं सप्ताक्षरादिषु वर्णैलादिषु सुस्वरादिकाः संज्ञा योजनीयाः । **मण्ठद्वितीयेत्यादि** । मण्ठादितालानां लक्षणानि तालाध्याये वक्ष्यन्ते ; तत एव तान्यवगन्तव्यानि । **रागादिनियमो न त्विति** । एतासु वर्णैलासु मण्ठद्वितीयकङ्कालप्रतितालेषु कश्चनेत्येतावानेव नियमः । न तु नादावत्यादिषूक्तो रागरसरीतिवृत्तिदेवतानियमः कर्तव्य इत्यर्थः । अत्रानेन

रमणी चन्द्रिका लक्ष्मीः पद्मिनी रञ्जनी तथा ॥ ११३ ॥
मालती मोहिनी सप्त मतङ्गेन प्रकीर्तिताः ।
यतिमात्रेण भिन्नास्ता इत्यस्माभिर्न दर्शिताः ॥ ११४ ॥
कर्णाटलाटगौडान्ध्रद्राविडानां तु भाषया ।
देशाख्यैला बुधैः पञ्च प्रोक्ता मण्ठादितालतः ॥ ११५ ॥

रागादिनियमनिषेधेन पूर्वोक्तासु विकृतासु गणैलासु रतिलेखादिषु मात्रैलासु प्रथमं शुद्धासु च नादावत्यादिषूक्तस्तालरागरसरीतिवृत्तिदेवतानियमः सर्व एव कर्तव्य इत्युक्तं भवति । तत्र तु गणमात्राविकारत एव भेदो द्रष्टव्यः । **यतिमात्रेण भिन्ना** इति । यतिरत्र पदविच्छेदः । तन्मात्रस्य भेदकत्वादिति भावः ॥ -१०६–११४ ॥ इति वर्णैलाः ॥

(सु०) वर्णैलां निरूपयति—**गणमात्रेति** । यासु गणमात्राद्यनियमो नास्ति, केवलं वर्णसंख्यानियमेनोपनिबद्धास्ते वर्णैलाः ; तासां भेदानाह—**षडक्षरादिति** । षडक्षरादङ्घ्रिखण्डादारभ्य, एकोनत्रिंशदक्षरपर्यन्तमङ्घ्रिखण्डे क्रियमाणे चतुर्विंशतिर्वर्णैला भवन्ति । तासां क्रमेण नामान्याह—**प्रथमेति** । षडक्षराङ्घ्रिखण्डवती मधुकरी । सप्ताक्षराङ्घ्रिखण्डवती सुस्वरा इत्याद्येकोनत्रिंशदक्षरा तरलेति यावज्ज्ञातव्यम् । **तत्रेति** । तत्राष्टदशाक्षरखण्डादूनत्रिंशदक्षरखण्डं यावद्द्वादशैलाः वर्णैलामात्रैलाभिर्भवन्ति । अतस्ता वर्णमात्रैला इति केषांचिन्मतम् । सा तु वर्णसंख्या वर्णताला अन्या द्वादशकलेति मण्ठादयोऽष्टादशाक्षरास्तावत्संख्याभिर्मात्राभिर्युक्ता मात्रैला भवन्ति । एतासु तालेष्वनियमः । नियमे तु मण्ठादय एव ताला वर्णैलासु कर्तव्याः । एतासु रागनियमो नास्तीति रमण्यादिमोहिन्यन्ताः सप्त मूर्च्छना मतङ्गेनोक्ताः ; ता अल्पभेदत्वान्नोक्ता इत्याह—**रमणीति** ॥ -१०६—११४ ॥ इति वर्णैलाः ॥

(क०) अथ देशाख्यैलां लक्षयति—**कर्णाटलाटेत्यादिना** । **मण्ठादितालत** इति । अत्रादिशब्देन द्वितीयकङ्कालप्रतिताला गृह्यन्ते । मण्ठादिषु

कर्णाटैलादिमध्यान्तवर्त्यनुप्रासभूषिता ।
नादावत्यादिका एव कर्णाटीरपरे विदुः ॥ ११६ ॥
षट्प्रकारत्वमेतासां वक्ष्यमाणैर्विशेषणैः ।
ब्रह्मणः पूर्ववदनाज्जन्म शंभुर्गणाधिपः ॥ ११७ ॥
आद्याङ्घ्री आद्यनुप्रासो रत्यन्तं मदनद्वयम् ।
प्रत्येकं च तयोरादिमध्यप्रासस्तृतीयकः ॥ ११८ ॥
चतुष्कामो रतिप्रान्तः सुलेखा स्यात्तदादिमा ।
दक्षिणा स्याज्जनुर्यस्याः सावित्री देवता हरिः ॥ ११९ ॥
गणाधिपश्चतुष्कामं प्रत्येकं चरणद्वयम् ।
आदिमध्यस्थितं प्रासं त्रिप्रासोऽङ्घ्रिस्तृतीयकः ॥ १२० ॥
अष्टौ कामाः कामलेखा प्रोक्ता हंसावती च सा ।
पश्चिमाद्वदनाज्जन्म ब्रह्मा यस्या गणाधिपः ॥ १२१ ॥
गायत्री देवताप्यादिमध्यप्रासास्त्रयोऽङ्घ्रयः ।

चतुर्षु तालेष्वन्यतमेन गातव्या इत्यर्थः । **आदिमध्यान्तवर्त्यनुप्रासभूषितेति** । कर्णाटैलानां मिथः सामान्यलक्षणम् । इतराभ्यो विशेषलक्षणं च । **नादावत्यादिका** इत्यादि । अपर आचार्या नादावत्यादिका एव कर्णाटीर्विदुरिति । अत्रैवकारेण शुद्धानां नादावत्यादीनां चतसृणां यल्लक्षणमुक्तं तत्सर्वत्रापि कर्तव्यमिति गम्यते । किं तु कर्णाटीरित्यनेन भाषया भेदो द्रष्टव्यः । **षट्प्रकारत्वमित्यादि** । एतासां कर्णाटीनां वक्ष्यमाणैर्विशेषणैरुपलक्षितानां षट्प्रकारकत्वं द्रष्टव्यम् । तत्र नादावत्यादिका एवेत्यनेनोक्त एकः प्रकारः । इतरे पञ्च प्रकारा वक्ष्यमाणैर्विशेषणैर्द्रष्टव्याः । उक्तेन प्रथमप्रकारेण चतस्रः कर्णाट्यो भवन्ति । '**ब्रह्मणः पूर्ववदनात्**' इत्यारभ्य

पृथक्चतुःस्मरा नन्दावती सा स्वरलेखिका ॥ १२२ ॥
जन्मोत्तरा स्याद्गन्धर्वो गणेशः षट् च मान्मथाः ।
बाणान्ताः पादयोर्यस्याः प्रत्येकं स्युस्तृतीयके ॥ १२३ ॥
अष्टौ कामा आदिमध्यप्रान्तप्रासास्त्रयोऽङ्घ्रयः ।
भद्रावती भद्रलेखा सा स्यात्कर्णाटसंमता ॥ १२४ ॥

'सा स्यात्कर्णाटसंमता' इत्यन्तेन ग्रन्थेन द्वितीयप्रकारस्य विशेषणान्युक्तानि । एतैर्युक्ता रतिलेखाद्यपरपर्याया नादावत्यादय एव पुनश्चतस्रः कर्णाट्यः । सुलेखेति । रतिलेखेत्यर्थः । आदिमा नादावती ॥ ११५–१२४ ॥

(सु०) देशाख्यैलां निरूपयति—कर्णादिति । देशाख्यैला पञ्चविधा; कर्णाटभाषयोपनिबद्धा कर्णाटैला; लाटभाषया लाटैला; गौडभाषया गौडैला; आन्ध्रभाषया आन्ध्रैला; द्राविडभाषया द्राविडैला इति । एता मण्ठद्वितीयकङ्कालप्रतितालादितालैः पूर्वोक्तैर्गेयाः । कर्णाटैलायां विशेषमाह—कर्णाटैलेति । आदौ मध्य अन्ते च वर्तते; तेनानुप्रासालंकृता कर्णाटैला कर्तव्येति । कर्णाटैलानां पूर्वोक्तनादावत्यादिभ्यो भेदं मतान्तरेणाह—नादावत्यादिका इति । कर्णाटैलानां भेदानाह—षट्प्रकारत्वमिति । एतासां कर्णाटैलानां षट्प्रकारत्वं षड्भेदत्वम् । तानेव भेदानाह—ब्रह्मण इति । ब्रह्मणः पूर्वमुखाज्जन्म, गणानामधिपः शंभुः; आद्यौ द्वावङ्घ्री पादावाद्यनुप्राससंयुक्तौ, तयोश्च पादयोः पूर्वोक्तौ कामौ मगणद्वयमन्ते, रतिगणसंयुक्तमधिकं तृतीयश्च पादः । आदौ तु मध्येऽनुप्राससंयुक्तः कामगणचतुष्टयेनैकेन रतिगणेन चाधिकेन संयुक्तस्तदा आद्या नादावती सुलेखेत्युच्यते । ब्रह्मणो दक्षिणमुखाज्जन्म सावित्री देवता, हरिर्विष्णुर्गणानामधिपः, कामगणचतुष्टयमत्र; आद्ययोः पादयोरादौ मध्ये चानुप्रासः; तृतीयश्चरणस्त्रिष्वादिमध्यावसानेष्वनुप्राससंयुक्तः, कामगणैरष्टभिः संयुक्तस्तदा पूर्वोक्ता हंसावती कामलेखेत्युच्यते । ब्रह्मणः पश्चिममुखाज्जन्म ब्रह्मा गणानामधिपः, गायत्री देवता, त्रिष्वप्यङ्घ्रिष्वादौ मध्ये चानुप्रासः, प्रतिचरणं चत्वारः कामगणास्तदा पूर्वोक्ता नन्दावती स्वरलेखेत्युच्यते । ब्रह्मण उत्तरमुखाज्जन्म गन्धर्वो देवता,

पञ्च कामा रतिश्चैका कामोऽन्ते चरणत्रये ।
प्रत्येकं तासु चेदेताश्छन्दस्वत्यो ऽखिला मताः ॥ १२५ ॥
गणादेर्न्यूनताधिक्यादेलाभासा इमा मताः ।
यदेकस्य द्वयोरङ्घ्र्योस्त्रयाणां वान्ततः कृतम् ॥ १२६ ॥
अङ्घ्रिपूर्त्यै तदन्यच्चेत्तृतीयाङ्घ्रिमितं पदम् ।
शिखापदं तत्तृतीयेऽङ्घ्रौ ततो मेलापकादयः ॥ १२७ ॥

गणानामधिपो गणेशः, प्रथमचरणद्वये षट् कामगणाः, अन्ते बाणगणः; तृतीयेऽङ्घ्रावष्टौ कामगणाः; अङ्घ्रित्रयेऽप्यादिमध्यावसानेष्वनुप्रासस्तदा पूर्वोक्ता मद्रावती मद्रलेखेत्युच्यते ॥ ११९—१२४ ॥

(क०) **पञ्च कामा रतिश्चैके**त्यादि। तृतीयप्रकारस्य विशेषणवचनम्। **एताश्छन्दस्वत्य** इति। एता अनन्तरोक्ता रतिलेखादयश्छन्दस्वत्यो नामान्याश्चतस्रः कर्णाट्यः। चतुर्थपञ्चमप्रकारयोर्विशेषणानि संभूयाह—**गणादेरि**त्यादि। अत्रादिशब्देन मात्रा गृह्यन्ते। इमाश्छन्दस्वत्य एव गणादेराधिक्यादित्यपरेण प्रकारेणाप्येलाभासा इत्यन्याश्चतस्रः कर्णाट्यः। न्यूनताधिक्यादित्यत्र न्यूनता चाधिक्यं चेति द्वंद्वैकवद्भावः। सकलैला-भासानुगतानि विशेषान्तराणि दर्शयति—**यदेकस्ये**त्यादिना। पूर्वं छन्द-स्वतीष्वेकस्य पादस्य द्वयोः पादयोस्त्रयाणां वा पादानामन्ततो ऽन्ते यत्कृतं कामोऽन्ते चरणत्रय इत्यङ्घ्रिपूर्त्यै तदन्यच्चेदित्यन्वयः। अन्यत्वं च न्यून-तयाधिक्याद्वा भवतीति। अन्यदिति साधारणो निर्देशः। तृतीयाङ्घ्रिमितं शिखापदं नाम पदं तृतीयेऽङ्घ्रौ तृतीयपादान्ते कर्तव्यमित्यर्थः। ततो मेलापकादय इत्यध्याहार्यम्। आदिशब्देन ध्रुवाभोगौ गृह्येते। एतेन मेलाप-कादीनां भाषाकृताद्विशेषादन्यो विशेषो नास्तीति सूचितं भवति। एवं पञ्चभिः प्रकारैः कर्णाटैला विंशतिर्भवन्ति ॥ १२५-१२७ ॥ इति कर्णाटैलाः ॥

प्रान्तप्रासा तु लाटी स्याद्भूयो रसविराजिता ।
गमकप्रासनिर्मुक्ता गौडी त्वेकरसा मता ॥ १२८ ॥
नानाप्रयोगरागांशरसभावोत्कटाङ्घ्रिका ।
भूरिभावरसोत्कर्षा द्राविडी प्रासवर्जिता ॥ १२९ ॥
तत्तल्लक्ष्मयुतस्तासु पादस्तुर्यो निबध्यते ।
तदैता गदिताः सर्वाश्छन्दस्वत्यः पुरातनैः ॥ १३० ॥
द्वावङ्घ्री प्रासहीनौ स्तस्तृतीयः प्राससंयुतः ।

(सु०) कर्णाटैलानां छन्दस्वतीमाह—पञ्चेति । कर्णाटैलासु चरणत्रये पञ्च कामगणाः ; एको रतिगणः ; अन्ते पुनः कामगणः ; तदा छन्दस्वत्य इत्युच्यन्ते । पूर्वोक्तगणानां न्यूनत्वे आधिक्ये वा एलाभासा इति कथ्यन्ते । शिखापदं लक्षयति—यदेति । एकस्य चरणस्य द्वयोस्त्रयाणां वान्तेऽन्येषां त्रयाणामङ्घ्रीणामप्रपूर्त्यै तृतीयाङ्घ्रौ प्रमाणं पदं क्रियते तच्छिखापदमुच्यते । तत्तु तृतीयेऽङ्घ्रौ प्रयोगात्ततो मेलापकादयः पूर्वं कर्तव्याः । अन्ययोः पादयोर्मेलापकाभावात् । ॥ १२१—१२७ ॥ इति कर्णाटैलाः ॥

(क०) अथ लाट्यादीनां सामान्यविशेषलक्षणानि—'**प्रान्तप्रासा तु लाटी स्यात्**' इत्यादीनि स्पष्टार्थानि । **तत्तदिति** । तत्तल्लक्ष्मयुतस्तास्वित्यनेन लाट्यादिच्छन्दस्वतीनां लक्षणं कर्णाटीभ्यश्छन्दस्वतीभ्यो विशेषात्पृथगुक्तम । इतरत्तु समानम् । तेन लाट्यादयो ऽपि कर्णाटीवत्प्रत्येकं विंशतिभेदवत्य इत्यवगन्तव्याः । षष्ठस्य प्रकारस्य विशेषणानि सामान्येन दर्शयति—**द्वावङ्घ्री** इत्यादिना । ध्रुवाभोगौ चेत्यत्र चकारेण ध्रुवाभोगयोरपि तृतीयाङ्घ्रिवत्प्रासयुक्तत्वमभ्युपगम्यते । तेनाद्यप्रकारद्वयाश्रितास्वेलासूक्तसमुच्चयार्थश्चकारो द्रष्टव्यः । छन्दस्वत्यादिषु तु परास्वेलासु चतुर्थपादस्यापि सद्भावादनुक्तस्य तस्य समुच्चयार्थश्चकारो द्रष्टव्यः । तेन तासु चतुर्थपादो

ध्रुवाभोगौ च तेषु स्युश्चतस्रो यतयः पृथक् ॥ १३१ ॥
वर्णैलावत्परं यस्यां सा वस्त्वेला निरूपिता ।
षट्पञ्चाशयुतं प्रोक्तमित्येलानां शतत्रयम् ॥ १३२ ॥
अनन्तत्वात्तु संकीर्णा न संख्याति हरप्रियः ।

ऽपि प्राससंयुतः कर्तव्य इत्यर्थः । **तेषु स्युरित्यादि** । तेषु त्रिषु वा चतुर्षु वा पादेषु पृथक्प्रत्येकं पादे पादे चतस्रो यतयश्चत्वारो विच्छेदाः स्युः । प्रतिपादं चतुरो विच्छेदान्कुर्यादित्यर्थः । **वर्णैलावदिति** । यथा वर्णैलासु रागरसरीतिवृत्तिदेवतानामनियमस्तथात्रापि तेषामनियम इत्यतिदेशार्थः । एवंविशिष्टा वस्त्वेला निरूपिता । अत्र जातिविवक्षयैकवचनम् । एवं षट्प्रकाराश्रयणेन पूर्वपरिगणितानां द्वैगुण्ये सति देशाख्यैला द्विशतं भवति । सकलैलाभेदगतां संख्यामाह—**षट्पञ्चाशदिति** । इतीत्युक्तप्रकारेण ; तथाहि—गणैलास्तावच्छुद्धा नादावत्यादयश्चतस्रः ; (४) विकृतास्त्रिनवतिः ; (९३) प्रकारान्तरेण विकृताः पञ्चदश ; (१५) मात्रैला विंशतिः ; (२०) वर्णैलाश्चतुर्विंशतिः (२४) देशाख्यैलासु—कर्णाट्यश्चत्वारिंशत् ; (४०) लाट्यश्चत्वारिंशत् ; (४०) गौड्यश्चत्वरिंशत् ; (४०) आन्ध्र्यश्चत्वारिंशत् ; (४०) द्राविड्यश्चत्वारिंशत् ; (४०) एवमेलानां षट्पञ्चाशयुतं शतत्रयम् (३५६) । **अनन्तत्वादिति** । हरप्रियः **शार्ङ्गदेवः**, संकीर्णाः, गणमात्रैलादिसंकरोत्पन्नाः संकीर्णैला अनन्तत्वाद्वक्तुमशक्यत्वादिति भावः । न संख्याति न परिगणयति । अयमेलाप्रबन्धस्तालादिनियमान्निर्युक्तः । मतान्तरेण मेलापकस्य सद्भावाच्चतुर्धातुः । मतान्तरेण तदभावात्त्रिधातुर्वा छन्दस्तालपदबद्धत्वेन द्व्यङ्गत्वात्तारावलीजातिमान् ॥ १२८–१३२- ॥ इति देशाख्यैलाः ॥ इत्येलालक्षणम् ॥

अष्टधा करणं तत्र स्वराद्यं पाटपूर्वकम् ॥ १३३ ॥
बन्धादिमं पदाद्यं च तेनाद्यं विरुदादिमम् ।
चित्राद्यं मिश्रकरणमित्येषां लक्ष्म कथ्यते ॥ १३४ ॥
यत्रोद्ग्राहध्रुवौ सान्द्रस्वरबद्धौ पदैः पुनः ।
आभोगस्तत्र नाम स्याद्गातृनेत्रोर्ग्रहः पुनः ॥ १३५ ॥
इष्टस्वरेंऽशे न्यासः स्याद्रासस्तालो द्रुतो लयः ।
करणं स्वरपूर्वं तत्तद्वदन्यान्यपि स्फुटम् ॥ १३६ ॥

(सु०) अन्यां देशाख्यैलां लक्षयति—प्रान्तप्रासेति । लाटैलायां प्रान्तेऽनुप्रासः; बहवो रसाः । गौडैलायां गमकानुप्रासौ न स्तः; एक एव रसः । आन्ध्रयैलायां नानाविधाः प्रयोगाः; गमका रागांशा रसा भावाश्च । द्राविडैलायां रसा भावाश्च बहुलाः; अनुप्रासो नास्ति । तत्तल्लक्ष्मेति । एतासु पूर्वोक्तासु सर्वास्वप्येलासु तत्तल्लक्षणसंयुक्तश्चतुर्थश्चरणो यदि निबध्यते तदैताश्छन्दस्वत्य इत्युच्यन्ते । वस्त्वैलां लक्षयति—द्वाविति । द्वौ चरणावनुप्रासहीनौ; तृतीयोऽनुप्रासयुक्तः; ध्रुवाभोगौ चानुप्रासयुक्तौ; तेषु सर्वेष्वपि वक्ष्यमाणाश्चतस्रो यतयः पृथक्पृथक् । अन्यल्लक्षणं पूर्वोक्तवर्णैलावत् । सा वस्त्वैलेति कथ्यते । उक्तैलाः संख्याति—षट्पञ्चाशत इति । चतस्रः शुद्धैलाः; (४) अष्टोत्तरं शतं विकृतैलाः; (१०८) विंशतिर्मात्रैलाः; (२०) वर्णैलाश्चतुर्विंशतिः; (२४) तासु मात्रैला द्वादश; (१२) कर्णाटैलाः षट्; (६) अन्या देशाख्यैलाश्चतस्रः; (४) एवमष्टसप्तत्यधिकं शतं (१७८) भवति, एतावत्य एव छन्दस्वत्यः । अस्माद्द्वैगुण्ये षट्पञ्चाशदधिकं शतत्रयमेला (३५६) भवन्ति । ननु संकीर्णभेदाः कथं न संख्यायन्ते? अत्राह—अनन्तत्वादिति । हरप्रियः शिवभक्तः शार्ङ्गदेवः ॥ १२८—१३२- ॥ इति देशाख्यैलाः ॥ इत्येलालक्षणम् ॥

(क०) अथ करणभेदानुद्दिश्य लक्षयति—**अष्टधा करणमित्यादिना** । **ग्रहः पुनरिष्टस्वर** इति । अत्र ग्रहशब्देन गीतारम्भ उच्यते; स त्विष्टस्वर इति; रागग्रहांशस्वरयोस्तदन्येषु वैकस्मिन्कर्तव्यः स्यादित्यनियमः

किं तु तेषां स्वरस्थाने भेदकानि प्रचक्ष्महे ।
स्वरैः सहस्तपाटैस्तु स्यात्पाटकरणं ध्रुवम् ॥ १३७ ॥
क्रमव्यत्यासभेदेन तद्द्विधा परिकीर्तितम् ।
स्वरैर्मुरजपाटैर्यत्तद्बन्धकरणं मतम् ॥ १३८ ॥
स्वरैः पदैश्च बद्धं यत्करणं तत्पदादिमम् ।
यत्स्वरैर्विरुदैर्बद्धं करणं विरुदादि तत् ॥ १३९ ॥
स्वरैः सतेनकैर्यत्तु तत्तेनकरणं मतम् ।
स्वरैः सकरपाटैर्यन्निबद्धं मुरजाक्षरैः ॥ १४० ॥
पदैस्तच्चित्रकरणमभिधत्ते हरप्रियः ।
स्यान्मिश्रकरणं बद्धं स्वरैः पाटैः सतेनकैः ॥ १४१ ॥

प्रदर्शितः । अत्र न्यासशब्देन गीतमोक्ष उच्यते; न तु स्वरविशेषः । तेनोद्ग्राहखण्डमारभ्यांशस्वरे गीतमोक्षः कर्तव्य इत्युक्तं भवति । **स्वरस्थाने भेदकानीति** । स्वराणां स्थानमात्रोद्ग्राहध्रुवकौ; भेदकानि वक्ष्यमाणानि हस्तपाटादीनि । स्वरकरणातिरिक्तपाटकरणादीनां स्वरूपभेदं दर्शयितुमाह —**स्वरैः सहस्तपाटैस्त्वित्यादिना** । हस्तपाटा नागबन्धादयः पटहोद्भवा वाद्याक्षरोत्करा वाद्याध्याये वक्ष्यन्ते । तैः सहिताः सहस्तपाटा इति स्वरविशेषणम् । अतः स्वराणां प्राधान्येन प्रथमप्रयोगोऽवसीयते । तेन पाटकरणे स्वरैरुद्ग्राहः स्यादनन्तरं हस्तपाटैर्ध्रुवः स्यादिति क्रमः । व्यत्यासो नाम तद्वैपरीत्यम् । स च हस्तपाटैरुद्ग्राहः स्वरैर्ध्रुव इति । बन्धकरणे स्वरैरुद्ग्राहः, मुरजपाटैर्ध्रुवः । पदकरणे स्वरैरुद्ग्राहः, पदैर्ध्रुवः । विरुदकरणे स्वरैरुद्ग्राहः, विरुदैर्ध्रुवः । तेनकरणे स्वरैरुद्ग्राहः, तेनकैर्ध्रुवः । चित्रकरणे स्वरैर्हस्तपाटैश्चोद्ग्राहः, मुरजाक्षरैः पदैश्च ध्रुवः । मिश्रकरणे स्वरपाटतेनकै-रुद्ग्राहः, तैरेव ध्रुवोऽपि स्यात् । तिलतण्डुलवदवयविसांकर्यं चित्रत्वम्;

मङ्गलारम्भ आनन्दवर्धनं कीर्तिपूर्विका ।
लहरीति त्रिधा तानि प्रत्येकं गानभेदतः ॥ १४२ ॥
द्विरुद्ग्राहं ध्रुवाभोगौ सकृद्गीत्वा पुनः सकृत् ।
गीयते चेद्ध्रुवोद्ग्राहौ मङ्गलारम्भकस्तदा ॥ १४३ ॥
उद्ग्राहध्रुवकौ प्राग्वद्ध्रुवार्धं पश्चिमं ततः ।
आभोगध्रुवकोद्ग्राहाः सकृदानन्दवर्धने ॥ १४४ ॥
उद्ग्राहस्य द्वितीयार्धं ध्रुवार्धस्थानगं यदि ।
इतरत्पूर्ववत्कीर्तिलहरी कीर्तिता तदा ॥ १४५ ॥

क्षीरनीरवदवयवसांकर्यं मिश्रत्वमिति भेदो द्रष्टव्यः । इह स्वरकरणादीनां भेदकानि स्वरादीनि विहाय मेलापकाभावेन त्रिधातुत्वम् । इष्टस्वरे गीतारम्भः, अंशस्वरे मोक्षः । रासस्तालो द्रुतो लय इत्येतैर्युक्तत्वं च करणप्रबन्धस्य सामान्यलक्षणत्वेन पृथगुक्तमप्युन्नेयम् । अत्र तालादिनियमस्य विद्यमानत्वादयं निर्युक्तः प्रबन्धः । मेलापकाभावात्त्रिधातुषु भेदेषु पर्यायेण यथायोगं षडङ्गबन्धत्वान्मेदिनीजातिमान् । एतानि नवापि करणानि गानप्रकारभेदेन त्रिधा भवन्तीत्याह—**मङ्गलारम्भ** इत्यादि । **कीर्तिपूर्विका लहरीति** । कीर्तिलहरीत्यर्थः । सुगममन्यत् । एवं करणानि सप्तविंशतिर्भवन्ति ॥ -१३३-१४५ ॥ इति करणप्रबन्धः ॥

(सु०) विभागक्रमेण करणं लक्षयति—**अष्टधेति** । करणमष्टप्रकारम्; स्वरकरणम्; पाटकरणम्; बन्धकरणम्; पदकरणम्; तेनकरणम्; बिरुदकरणम्; चित्रकरणम्; मिश्रकरणं चेति । तत्र स्वरकरणं लक्षयति—**यत्रेति** । उद्ग्राहो ध्रुवश्च सान्द्रैर्निबिडैः स्वरैर्बद्धौ, आभोगस्तु पदैर्विरच्यते; तत्राभोगो गातुर्वाग्गेयकारस्य नेतुर्नायकस्य च नाम भवेत् । इष्टे त्वभिलषिते स्वरे ग्रहः; अंशस्वरे न्यासः; वक्ष्यमाणरासाख्यस्तालः, द्रुतो लयः, तत्स्वरकरणमिति ज्ञेयम् । अन्यान्यपि स्वरकरणवत्पाटकरणादीनि विधेयानि । तर्हि कथं परस्परं

**द्विर्गीत्वोद्ग्राहपूर्वार्धमुत्तरार्धं सकृत्ततः ।**
**मेलापकः प्रयोगात्मा न वा स्यात्तावुभावपि ॥ १४६ ॥**

भेदस्तत्राह—किं त्विति । तेषां किंचित्स्वरस्थाने भेदोऽस्ति, तथा च सादृश्ये सत्यपि भेदः सिध्यति । पाटकरणं लक्षयति—स्वरैरिति । हस्तपाटसहितैः स्वरैर्यदुपनिबध्यते तत्पाटकरणम् । तद्द्विप्रकारम्; क्रमेण व्यत्यासेन च । आदौ स्वराः पश्चाद्धस्तपाटा यदि निबध्यन्ते तदा क्रमपाटकरणम् । यदा पूर्वं हस्तपाटाः पश्चात्स्वरास्तदा व्यस्तपाटकरणम् । बन्धकरणं लक्षयति—स्वरैरिति । स्वरैर्मुरजपाटैश्च यद्बध्यते तद्बन्धकरणम् । पदकरणादीनि लक्षयति—स्वरैरिति । स्वरैः पदैश्च यद्बध्यते तत्पदकरणम् । यत्रासौ विरुदश्च बध्यते तद्विरुदकरणम् । स्वरैस्तेनकैश्च यद्बध्यते तत्तेनकरणम् । स्वरैर्हस्तपाटैर्मुरजाक्षरैश्च यद्बध्यते तच्चित्रकरणम् । स्वरैःपाटैस्तेनैश्च यद्बध्यते तन्मिश्रकरणम् । एतेषां प्रत्येकं त्रैविध्यं कथयति—मङ्गलारम्भ इति । गानभेदतः गानप्रकारभेदात् । तमेव गानप्रकारे भेदमाह—द्विरुद्ग्राहमिति । यत्रोद्ग्राहः पूर्वं द्विवारं गीयते; ततोऽनन्तरं ध्रुवाभोगौ सकृद्गीत्वा पुनश्च ध्रुवोद्ग्राहौ सकृद्गीयते; तदा मङ्गलारम्भः, यदा तूद्ग्राहध्रुवौ प्राग्वन्मङ्गलारम्भवदुद्ग्राहो द्विर्गीयते; ततो ध्रुवः सकृत्, ततोऽनन्तरं ध्रुवस्य पश्चिमार्धं गीयते; ततोऽनन्तरमाभोगध्रुवोद्ग्राहाः सकृद्गीयन्ते, तदानन्दवर्धनः । यस्तु ध्रुवस्यार्धस्थाने उद्ग्राहद्वितीयार्धं गीयते अन्यल्लक्षणमानन्दवर्धनवत्तदा कीर्तिलहरी । एवं सप्तविंशतिः स्वरकरणादीन्यक्षरेषु । पाटकरणं द्विधेत्यनेनैतेषां नवानां मङ्गलारम्भादिभेदेन त्रैविध्ये सप्तविंशतिर्भेदा भवन्ति ॥ -१३३—१४५ ॥ इति करणप्रबन्धः ॥

(क०) अथ देङ्कीं लक्षयति—**द्विर्गीत्वेत्यादि** । प्रयोगात्मा मेलापकः स्यान्न वेति प्रयोगस्वरूपस्यात्र वैकल्पिकत्वमुच्यते । एलायां स्वरूपेण स्वत एव प्रयोगस्य मतभेदेनोद्ग्राहव्यपदेशो वा मेलापकव्यपदेशो वेति व्यपदेशविकल्पो द्रष्टव्यः । **तावुभावपीति** । मेलापकसद्भावपक्षमाश्रित्येदं वचनम् । तावुद्ग्राहमेलापकावुभावप्यतालौ तालरहितावित्येकः पक्षः ।

अतालौ ढेङ्किकाताले कङ्काले वा विलम्बिते[1] ।
लयान्तरेऽन्यतालेन ध्रुवाभोगौ ध्रुवस्त्विह ॥ १४७ ॥
त्रिखण्डस्तत्र खण्डे द्वे गीयेते समधातुनी ।
तृतीयमुच्चमेष द्विराभोगस्तु सकृत्ततः ॥ १४८ ॥
पुनर्गीत्वा ध्रुवे न्यासो यस्यां सा ढेङ्किका मता ।
चतुर्धा ढेङ्किका मुक्तावली स्याद्वृत्तबन्धिनी ॥ १४९ ॥
युग्मिनी वृत्तमाला च तासां लक्ष्माण्यमून्यथ ।
अभावश्छन्दसां वृत्तं वृत्ते वृत्तानि च क्रमात् ॥ १५० ॥
त्रिधा तिस्रो द्वितीयाद्या वर्णिका गणिका तथा ।

विलम्बितढेङ्किकाताले विलम्बिते कङ्कालताले वा तौ भवत इत्येतत्पक्षद्वयम् । **लयान्तरेऽन्यतालेने**ति । ध्रुवाभोगौ लयान्तरे विलम्बितादन्यस्मिँल्लये मध्यलये द्रुतलये वेत्यर्थः । **अन्यतालेने**ति । ढेङ्किकाकङ्कालाभ्यामन्येन येन केनचित्तालेनेत्यर्थः । **समधातुनी** इति । एकधातुक इत्यर्थः । **एष द्विरि**ति । एष ध्रुवो द्विर्द्विवारं गेय इत्यर्थः । ततो ध्रुवानन्तरमाभोगस्तु सकृद्गातव्यः । **पुनर्गीत्वे**ति । एवमुक्तलक्षणं सकलं प्रबन्धं द्वितीयवारमपि गीत्वा ध्रुवे ध्रुवखण्डादौ न्यासः कर्तव्य इति गाननियम उक्तः । **अभाव** इति । छन्दसामभावो मुक्तावल्या लक्षणम् । **वृत्तमि**ति । वृत्तबन्धिन्या लक्षणम् । वृत्तबन्धिनीमेकेनैव वृत्तेन गायेदित्यर्थः । एवमुत्तरयोरपि द्रष्टव्यम् । **वृत्ते** इति । युग्मिन्या लक्षणम् । **वृत्तानी**ति । वृत्तमालाया लक्षणम् । अत्र वृत्तानीति बहुवचनेन त्रिप्रभृतीनि गृह्यन्ते । **द्वितीयाद्यास्तिस्र** इति । वृत्तबन्धिनी युग्मिनी वृत्तमाला उच्यन्ते । **त्रिधे**ति । वक्ष्यमाणेन प्रकारेण । तमेवाह—**वर्णिकेत्या**दिना । वर्णजैर्वृत्तैर्वर्णिका; गणजैर्वृत्तैर्गणिका; मात्रजै-

[1] विलम्बितौ इति सुधाकरपाठः

**मात्रिका वर्णजैर्वृत्तैर्गणजैर्मात्रिकैरपि ॥ १५१ ॥**

वृत्रैर्मात्रिकेति तिसृणां लक्षणानि । तत्र वर्णसंख्यामात्रनिर्वृत्तानि वृत्तानि वर्णजानि समानीप्रभृतीनि । गणैर्निर्वृत्तानि गणजान्यार्याप्रमुखानि भुजङ्गप्रयातादीनि । मात्रासंख्ययैव निर्वृत्तानि मात्रिकाणि वैतालीयादीनि । यथोक्तं छन्दोविचितौ—

"आदौ तावद्गणच्छन्दो मात्राच्छन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ।" इति ॥

आर्याचार्यागीतिपर्यन्तं गणच्छन्दः ; वैतालीयादि चूलिकापर्यन्तं मात्राच्छन्दः ; समान्यादिकमुत्कृतिपर्यन्तमक्षरच्छन्द इति । तेषां त्रिविधानां वृत्तानां लक्षणानि छन्दःशास्त्र एवावगन्तव्यानि । दिङ्मात्रप्रदर्शनार्थं किंचिदुदाह्रियते—

'ओं नमो जनार्दनाय दुष्टदैत्यमर्दनाय ।
पापबन्धमोचनाय पुण्डरीकलोचनाय ॥'

इति समानी ।

"पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात् ।
यदि मनसा वचसा च प्रद्रुह्यति न भूतेभ्यः ॥"

इति पथ्या ।

"तव तन्वि कटाक्षवीक्षितैः प्रसरद्भिः श्रवणान्तगोचरैः ।
विशिखैरिव तीक्ष्णकोटिभिः प्रहृतं प्राणनदुष्करं मनः ॥"

इति वैतालीयम् । एवं प्रथमया मुक्तावल्या सह दश देङ्क्यो भवन्ति ।

दशापि स्युः पुनस्त्रेधा समालंकरणा तथा ।
विषमालंकृतिश्चित्रालंकृतिर्लक्षणानि तु ॥ १५२ ॥
समालंकारसंख्या च विषमा मिश्रिता क्रमात् ।

तासां पुनस्त्रैविध्यमाह—**दशापी**त्यादिना । **अलंकारसंख्या समे**ति । समालंकरणाया लक्षणम् । सैव विषमेति विषमालंकृतेर्लक्षणम् । सैव मिश्रितेति विचित्रालंकृतेर्लक्षणम् । अत्रालंकारशब्देन प्रासानुप्रासयमकादयो गृह्यन्ते । एवं त्रिंशद्ढेङ्क्यः (३०) । अयं प्रबन्धश्छन्दस्तालादिनियमान्नियुक्तो मेलापकस्य वैकल्पिकत्वाच्चतुर्धातुस्त्रिधातुर्वा पदतालबद्धत्वेन द्व्यङ्गत्वात्तारावलीजातिमान् ॥ १४६—१५२ ॥ इति ढेङ्कीप्रबन्धः ॥

(सु०) ढेङ्कीं लक्षयति—**द्विर्गीत्वे**ति । यत्रोद्ग्राहस्य पूर्वार्धं द्विर्गीयते; ततः सकृदुत्तरार्धम्, ततो गमकसंदर्भवान्मेलापकः क्रियते वा न वा; तावुभावप्युद्ग्राहमेलापकौ तालशून्यौ वा, ढेङ्किकातालेन कङ्कालतालेन वा विलम्बितौ कार्यौ । ततो विलम्बितादन्येन लयेन, अन्यतालेन कङ्कालतालेन ध्रुवाभोगौ कार्यौ; तत्र ध्रुवस्त्रिखण्डः खण्डत्रययुक्तः । तेषु खण्डेषु द्वे खण्डे समधातुनी समगेये कर्तव्ये; तृतीयं खण्डं ताभ्यामुच्चमानेन कार्यम् । एष ध्रुवो द्विर्गेयः । ततोऽनन्तरं सकृदाभोगः; पुनरपि ध्रुवं गीत्वा न्यासः समाप्तिः सा ढेङ्की । सा चतुर्विधा; मुक्तावली, वृत्तबन्धिनी, युग्मिनी, वृत्तमाला चेति । तासां क्रमेण लक्षणान्याह—**अभाव** इति । यस्याश्छन्दो नास्ति सा मुक्तावली । यस्यां त्वेकमेव वृत्तं सा वृत्तबन्धिनी । वृत्तद्वयवती युग्मिनी । बहुवृत्तवती वृत्तमालेति । तासु वृत्तबन्धिन्यादयस्तिस्रः प्रत्येकं त्रिधा; वर्णिका, गणिका, मात्रिका चेति । वर्णजैर्वृत्तैर्वर्णिका; गणजैर्वृत्तैर्गणिका; मात्रजैर्वृत्तैर्मात्रिकेति । एवं दशधापि सा त्रिविधा; समालंकरणा, विषमालंकरणा, चित्रालंकरणा चेति । समालंकारैरुपमादिभिर्युक्ता समालंकृतिः; त्र्यादिसंख्यायुक्तैर्विषमैरलंकारैर्युक्ता विषमालंकृतिः; समैर्विषमैश्च चित्रालंकृतिरिति ॥ इति त्रिंशद्ढेङ्क्यः ॥ १४६—१५२ ॥ इति ढेङ्कीप्रबन्धः ॥

स्वराद्यकरणस्येव वर्तन्या लक्ष्म किं त्विह ॥ १५३ ॥
रासकादन्यतालः स्याल्लयो ज्ञेयो विलम्बितः ।
द्विरुद्ग्राहो ध्रुवाभोगौ सकृन्मोक्षो ध्रुवे भवेत् ॥ १५४ ॥
कङ्काले प्रतिताले च कुडुक्के द्रुतमण्ठके ।
रचिता चेत्तदा ज्ञेया वर्तन्येव विवर्तनी ॥ १५५ ॥
द्विर्यत्रोद्ग्राहपूर्वार्धमुत्तरार्धं सकृत्ततः ।
मेलापकः प्रयोगाढ्यः स वा स्याद्द्विस्ततो ध्रुवः ॥ १५६ ॥

(क०) अथ वर्तनीं लक्षयति—**स्वराद्येत्यादिना** । स्वराद्यकरणस्येवेति स्वरकरणस्य यथा लक्ष्म लक्षणमुद्ग्राहध्रुवयोः स्वरबद्धत्वमाभोगे पदबद्धत्वमित्यादि सर्वमतिदेशतः प्राप्तं द्रष्टव्यम् । भेदकं दर्शयितुमाह—**किंत्विति** । इह वर्तन्याम् । **रासकादन्यताल** इति । करणप्रबन्धोक्ताद्रासकादन्यो यः कश्चन तालो विलम्बितो लयश्चेति विशेषः । **द्विरुद्ग्राह** इत्यादि । मोक्षो न्यासः । **कङ्काल** इत्यादि । कङ्कालादिषु चतुर्षु तालेष्वन्यतमेन रचिता चेदियमेव वर्तनीसंज्ञा भवति । अयं प्रबन्धस्तालादिनियमान्निर्युक्तो मेलापकाभावात्त्रिधातुः स्वरपदतालबद्धत्वेन त्र्यङ्गत्वाद्भावनीजातिमान् ॥ -१५३—१५५ ॥ इति वर्तनीप्रबन्धः ॥

(सु०) वर्तनीं लक्षयति—स्वाद्येति । स्वरकरणस्येव वर्तन्या लक्षणम् । किं त्वयं विशेषः । रासकतालादन्यस्तालः ; विलम्बितो लयः ; उद्ग्राहो द्विर्गीयते ; ध्रुवाभोगौ सकृत् ; ध्रुवे न्यासः । वर्तनीविशेषमेव विवर्तनीं लक्षयति—कङ्काल इति । कङ्कालताले प्रतिताले वा विरच्यते चेत्तदा वर्तन्येव विवर्तनीत्युच्यते ॥ -१५३—१५५ ॥ इति वर्तनीप्रबन्धः ॥

(क०) अथ झोम्बडं लक्षयति—**द्विर्यत्रेदिना** । प्रयोगाढ्यः प्रयोगप्रचुर इत्यनेन मेलापकस्य किंचिद्वाचकपदयुक्तत्वमभ्युगम्यते । **स वा स्या-**

आभोगं तु सकृद्गीत्वा ध्रुवे न्यासः स झोम्बडः ।
निःसारुकः कुडुक्कश्च त्रिपुटप्रतिमण्ठकौ ॥ १५७ ॥
द्वितीयो गारुगी रासयतिलग्नाड्डतालिकाः ।
एकतालीत्यमी ताला झोम्बडे नियता दश ॥ १५८ ॥
केचिन्मण्ठमपीच्छन्ति नैष लक्ष्येषु लक्ष्यते ।
तारजोऽतारजश्चेति झोम्बडो द्विविधो मतः ॥ १५९ ॥
तारो ध्वनिस्थानकं स्यात्तद्युक्तस्तारजो मतः ।
स चतुर्धा स्थानकस्योद्ग्राहादिषु निवेशने ॥ १६० ॥
अतारजस्तारहीनः सर्वोऽप्येष द्विधा मतः ।
त्रिधातुश्च चतुर्धातुरिति भूयो भवेद्द्विधा ॥ १६१ ॥
प्रभूतगमकः स्तोकगमकश्चेत्यमी स्फुटाः ।

दिति । मेलापको वा स्यात् । पक्षे भवति न भवतीत्यर्थः । ततोऽनन्तरं ध्रुवं द्विवारं गीत्वा, आभोगं तु सकृद्गीत्वा ध्रुवे न्यासः कृतश्चेत्स झोम्बडः । झोम्बडे तालनियममाह—**निःसारुक** इत्यादि । निःसारुकादिषु दशस्वेकेन तालेन गातव्य इति नियमो द्रष्टव्यः । **स चतुर्धे**त्यादि । स तारजः । **उद्ग्राहादिषु निवेशन** इति । उद्ग्राहस्य तारजत्व एको भेदः ; मेलापकस्य तारजत्वे द्वितीयः ; ध्रुवस्य तारजत्वे तृतीयः ; आभोगस्य तारजत्वे चतुर्थः ; एवं चतुर्धा तारजः । तारहीनत्वादतारज एको भेदः । **सर्वोऽप्येष** इति । उक्तप्रकारेण पञ्चविध एव झोम्बडः । **त्रिधातुश्च चतुर्धातुरिति** । **द्विधा मत** इति । तारजाश्चतुर्धातवश्चत्वारः ; मेलापकाभावपक्षे तारजास्त्रिधातवस्त्रय एव ; अतारजश्चतुर्धातुरेकः ; अतारजस्त्रिधातुरेकः ; एवं संभूय नव झोम्बडा भवन्ति । **भूय** इति । **प्रभूतगमकः स्तोकगमकश्चेति** । नवानां प्रत्येकं द्वैविध्येनाष्टादश झोम्बडाः, **स्फुटा** व्यक्तरूपाः । अत्र त्रिधातूनां भेदानां

प्रायोगिकः क्रमाख्यश्च ततः क्रमविलासकः ॥ १६२ ॥
चित्रो विचित्रलीलश्चेत्यमी स्युः पञ्चधा पृथक् ।
चतुराद्यष्टपर्यन्तं गणनिष्पादिताः क्रमात् ॥ १६३ ॥
मातृकः श्रीपतिस्तद्वत्सोमो रुचिरसंगतौ ।
ते लक्ष्येष्वप्रवृत्तत्वादस्माभिर्न प्रपञ्चिताः ॥ १६४ ॥
विनियोगवशादेषां त्रयोदश भिदाः पृथक् ।
उपमारूपकश्लेषैर्ब्रह्मा वीरविलासयोः ॥ १६५ ॥
विष्णुश्चक्रेश्वरो वीरे बीभत्से चण्डिकेश्वरः ।
नरसिंहोऽद्भुतरसे भैरवस्तु भयानके ॥ १६६ ॥

मेलापकाभावेऽप्युद्ग्राहध्रुवान्तर्भूतप्रयोगवत्त्वेन प्रभूतगमकत्वं च द्रष्टव्यम् । अनेन भेदकथनेनैव त्रिधातुष्वपि झोम्बडेषु प्रयोगो विधातव्य इत्युक्तं भवति । **प्रायोगिक** इत्यादि । अमी अष्टादश झोम्बडाः पृथक्प्रत्येकम् । क्रमाच्चतुराद्यष्टपर्यन्तं गणनिष्पादिता इति; चतुर्गणनिष्पादितः प्रायोगिकः; पञ्चगणनिष्पादितः क्रमाख्यः; षड्गणनिष्पादितः क्रमविलासः; सप्तगणनिष्पादितश्चित्रः; अष्टगणनिष्पादितो विचित्रलीलश्चेति पञ्चधा स्युः । एवं च सति नवतिर्झोम्बडा भवन्ति । **विनियोगवशादि**त्यादि । विनियुज्यन्त इति विनियोगाः; शृङ्गारादयो रसा उपमादयोऽलंकाराश्चात्र विवक्षिताः; तद्वशादित्यर्थः । एषां नवतिसंख्याकानां झोम्बडानां पृथक्प्रत्येकं ब्रह्मादयो वक्ष्यमाणास्त्रयोदश भेदा भवन्ति । ब्रह्मादींस्त्रयोदश भेदाँल्लक्षयति—**उपमारूपके**त्यादिना । उपमारूपकश्लेषैः, उरुपमारूपकश्लेषाख्यैरेवालंकारैर्लक्षितो ब्रह्माभिधो भेदो भवति । अत्र साधर्म्यमुपमाभेद इत्युपमालक्षणम् । चन्द्रवत्कान्तं मुखमित्युदाहरणम् । तद्रूपकमभेदो य उपमानोपमेययोरिति रूपकलक्षणम् । मुखमेव चन्द्र इत्युदाहरणम् । 'श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत्'

हास्यशृङ्गारयोर्हंसः सिंहो वीरभयानके ।
विप्रलम्भे तु सारङ्गः शेखरः करुणे रसे ॥ १६७ ॥
सम्भृङ्गारे पुष्पसारः शृङ्गारे परिकीर्तितः ।
रौद्रे प्रचण्डो नन्दीशः शान्ते धीरैरुदीरितः ॥ १६८ ॥
गद्यजाः पद्यजा गद्यपद्यजा इति ते त्रिधा ।
झोम्बडा इति संख्याता वियच्चन्द्रशराग्नयः ॥ १६९ ॥

इति श्लेपलक्षणम् । चन्द्रनृपयोर्वाचको राजेतिशब्द उदाहरणम् । वीर-विलासयोर्विष्णुः । वीरे चक्रेश्वर इत्यादि योजनीयम् । वीरविलासयोरित्यत्र वीरशब्दसाहचर्याद्विलासशब्देन संभोगशृङ्गारो लक्ष्यते ; तदनुभावत्वाद्विला-सस्य । शृङ्गारादयो रसा नृत्ताध्याये निरूपयिष्यन्ते । एवं त्रयोदशभिर्भेदै-र्झोम्बडानां नवतौ पृथग्गुणितायां सप्तत्युत्तरशतसहितं सहस्रं (११७०) झोम्बडा भवन्ति । गद्यजा इत्यादि । उक्तसंख्यानां झोम्बडानां गद्यजादिभि-र्भेदैः पुनस्त्रैविध्ये सति तद्भेदजां संख्यामाह—वियच्चन्द्रशराग्नय इति । विय-च्छून्यं बिन्दुरित्यर्थः । प्रथमं बिन्दुर्लेखनीयः । चन्द्रशब्देनैकसंख्या लभ्यते ; चन्द्रस्यैकत्वेन प्रसिद्धेः । लेखकापेक्षया बिन्दोर्वामपार्श्वे एकाङ्को लेखनीयः । शरशब्देन पञ्चसंख्या लभ्यते ; मदनबाणानां पञ्चत्वेन प्रसिद्धेः । एकाङ्क-वामपार्श्वे पञ्चाङ्को लेखनीयः । अग्निशब्देन त्रिसंख्या लभ्यते ; यज्ञियाना-मग्नीनां त्रित्वेन वेदतः प्रसिद्धेः । पञ्चाङ्कवामपार्श्वे त्रिसंख्याङ्को लेखनीयः ; इति चतुर्ष्वङ्केषु लिखितेष्वेकं दश शतं सहस्रमित्यादिकया गणितपरिभाषया बिन्द्वादिक्रमेण योजितेषु दशोत्तरपञ्चशतीयुतानि त्रीणि सहस्राणि (३५१०) झोम्बडाः संख्याता भवन्ति । अयं प्रबन्धस्तालादिनियमान्निर्युक्तो मेलापकस्य वैकल्पिकत्वाच्चतुर्धातुस्त्रिधातुश्च ; पदतालबद्धत्वेन द्व्यङ्गत्वात्तारावलीजाति-मान् ॥ १५६—१६९ ॥ इति झोम्बडप्रबन्धः ॥

(सु०) झोम्बडं लक्षयति—द्विर्यत्रेति। यत्रोद्ग्राहस्य पूर्वार्धं द्विर्गीयते; तत उत्तरार्धं सकृत्; ततो ऽनन्तरं गमकसंयुक्तो मेलापकः; स वा विकल्पेन स्यात्; तत्क्रियते वा न वेत्यर्थः। ततोऽनन्तरं ध्रुवो द्विर्गीयते। ततः सकृदाभोगं गीत्वा ध्रुवे समाप्तिः स झोम्बड इति ज्ञेयः। तत्र तालान्नियमयति—निःसारुक इति। निःसारुकाद्य एकताल्यन्ता दशताला झोम्बडे कर्तव्याः। केषांचिन्मते मण्ठतालोऽपि। परं तु स लक्ष्ये न दृश्यते। तस्मान्न कर्तव्यः। स झोम्बडो द्विविधः; तारजोऽतारजश्चेति। तत्र तारजं लक्षयति—तारज इति। तारस्थानोत्पन्नो ध्वनिस्तार इत्युच्यते; तेन युक्तो झोम्बडस्तारजः। स चतुःप्रकारः; उद्ग्राहध्रुवमेलापकाभोगेषु तारनिवेशनात्। अतारजं लक्षयति—अतारज इति। तारही नस्तारस्थानेन हीनोऽतारजः। एवं पञ्च भवन्ति। एते ऽपि द्विप्रकाराखिधातवश्चतुर्धातव इति। एवं सर्वे नवापि प्रभूतगमकस्तोकगमकभेदेन द्विधा; बहुगमकयुक्ताः प्रभूतगमकाः; अल्पगमकायुक्ता स्तोकगमकाः; एवमष्टादश; एतेषां प्रायोगिकादिभेदेन पञ्चविधत्वं कथयति—प्रायोगिक इति। चतुर्भिर्गणैर्निर्मितः प्रायोगिकः; पञ्चभिर्गणैर्निर्मितः क्रमाख्यः; षड्भिर्गणैर्निर्मितः क्रमविलासः सप्तभिर्गणैर्निर्मितश्चित्रः; अष्टभिर्गणैर्निर्मितो विचित्रलील इति। एवं नवतिर्भेदाः। मातृकादयो भेदा लक्ष्येष्वप्रसिद्धत्वान्नोक्ता इत्याह—मातृक इति। विनियोगवशादिति। एषां नवतिसंख्यानां पूर्वोक्तानां झोम्बडानां विनियोगवशात्प्रत्येकं त्रयोदश भेदानाह—उपमेति। उपमारूपकश्लेषालंकारा यदि बध्यन्ते तदा ब्रह्मनामा झोम्बडः; वीरो रसः, विलासश्च स्त्रीणां चेष्टाविशेषश्च यदि निबध्यते तदा विष्णुः; वीररसे चक्रेश्वरः; बीभत्सरसे चण्डिकेश्वरः; अद्भुतरसे नरसिंहः; भयानके भैरवः; हास्यशृङ्गारयोर्हंसः; वीरभयानकयोः सिंहः; विप्रलम्भशृङ्गारे सारङ्गः; करुणे रसे शेखरः; केवलशृङ्गारे पुष्पसारः; रौद्रे प्रचण्डांशुः; शान्ते नन्दीश इति। एवं त्रयोदशभिराहत्य च नवतौ गुणितायामेकादश शतानि सप्तत्यधिकानि (११७०) भवन्ति। एतेषां गद्यजत्वेन, पद्यजत्वेन, गद्यपद्यजत्वेन त्रैविध्ये दशोत्तराणि पञ्चत्रिंशच्छतानि (३५१०) भवन्ति। तदेवाह—वियच्चन्द्रशराग्नय इति। वियच्छून्यम्; (०) चन्द्र एकः; (१) शराः पञ्च; (५) अग्नयस्त्रयः; (३) अङ्कानां वामतो गतिरिति वामवृद्ध्या एतेष्वङ्केषु क्रमेण स्थापितेष्वियं संख्या (३५१०) संजायते ॥ १९६–१९९ ॥ इति झोम्बडप्रबन्धः ॥

उद्ग्राहो द्विः सकृद्वैकखण्डो द्विशकलो ऽथ वा ।
यत्र ध्रुवो द्विर्वाभोगो ध्रुवे मुक्तिः स लम्भकः ॥ १७० ॥
भागोऽस्मिन्झोम्बडेऽप्यूर्ध्वं ध्रुवादुद्ग्राहसंनिभः ।
ध्रुवाभोगध्रुवा गेयास्तत इत्यूचिरे परे ॥ १७१ ॥
उद्ग्राहस्तालशून्यश्चेत्स स्यादालापलम्भकः ।
स प्रलम्भो ध्रुवस्थाने यत्रोद्ग्राहोऽन्यधातुकः ॥ १७२ ॥
यत्र भागो भवेल्लम्भे भागलम्भः स भण्यते ।

(क०) अथ लम्भकं लक्षयति—**उद्ग्राहो द्विरित्यादि** । एकखण्ड उद्ग्राहो द्विः सकृद्वा गीयते ; अथवा द्विशकल उद्ग्राहो द्विः सकृद्वा गीयत इति प्रत्येकं द्वैविध्यं योजनीयम् । यत्र यस्मिँल्लम्भप्रबन्धे ध्रुवो द्विर्गेयो भवति । **वाभोग** इति । आभोगो वा क्वचिद्भवति ; क्वचिन्न भवतीत्यर्थः । **ध्रुवे मुक्तिरिति** । ध्रुवखण्डमारभ्य न्यासः कर्तव्य इत्यर्थः । लम्भकझोम्बडयोर्मतान्तरेण लक्षणान्तरं दर्शयति—**भागोऽस्मिन्नित्यादिना** । अस्मिँल्लम्भके झोम्बडेऽपि ध्रुवस्योर्ध्वभागो द्वितीयो भागः कर्तव्य इत्यर्थः । उद्ग्राहसंनिभः, उद्ग्राहेण तुल्यधातुकः कर्तव्य इत्यर्थः । ततो ध्रुवानन्तरम् । **ध्रुवाभोगध्रुवा गेया** इति । ध्रुवं द्विवारं गीत्वानन्तरमाभोगं सकृद्गीत्वा पुनरपि ध्रुवमेकवारं गीत्वा ध्रुवमारभ्य न्यासः कर्तव्य इत्यर्थः । लम्भकभेदान्दर्शयति—**उद्ग्राहस्तालशून्यश्चेत्यादिना** । उद्ग्राहस्य तालरहितत्वेन रागसाम्यादालापसाम्यादालापलम्भकसंज्ञान्वर्था द्रष्टव्या । **स प्रलम्भ** इति । यत्र यस्मिँल्लम्भके ध्रुवस्थान उद्ग्राहानन्तरमन्यधातुक उद्ग्राह इत्यनेन प्रथममुद्ग्राहो यैर्मातुभिः कृतस्तैरेव मातुभिरन्येन धातुना गीयते चेत्स प्रलम्भो नाम भेदः । **यत्र भागो भवेदिति** । इतरलम्भापेक्षया तत्साम्येनोद्ग्राहस्य प्रथमं भागं गीत्वा तद्द्वितीयभागे ध्रुवस्थाने ध्रुव-

त्रिश्चतुष्पञ्चवारं वा भिन्नोद्ग्राहसमन्वितः ॥ १७३ ॥
ध्रुवको गीयते यत्र स लम्भपदमुच्यते ।
ध्रुवभेदे ऽनुलम्भो ऽसौ द्विभेदे तूपलम्भकः ॥ १७४ ॥
एते त्रयोऽप्यनाभोगा विलम्भस्तु स उच्यते ।
उद्ग्राहा बहवो यस्मिन्ध्रुवाभोगविवर्जिताः ॥ १७५ ॥
एते सालगसूडस्थैस्तालैराकलिता मताः ।

द्वितीयभागो गीयते चेदन्वर्थतया भागलम्भो भण्यते। **भिन्नोद्ग्राहसमन्वित** इति। एक एव ध्रुवः प्रतिवारं भिन्नेनोद्ग्राहेण सह गीयते चेल्लम्भपदमिति तस्य नाम। **ध्रुवभेद** इति। एक एवोद्ग्राहः प्रतिवारं भिन्नेन ध्रुवेण गीयते चेदनुलम्भो नाम। **द्विभेदे त्विति**। प्रतिवारं भिन्नावुद्ग्राहध्रुवौ गीयेते चेदुपलम्भो नाम। **एते त्रयो ऽपीति**। लम्भपदानुलम्भोपलम्भाः; अनाभोगाः, न विद्यत आभोगो येषां ते तथोक्ताः। एतेन भेदान्तरेष्वाभोगः कर्तव्य इत्युक्तं भवति। तेनात्राभोगस्य वैकल्पिकत्वं विषयव्यवस्थया द्रष्टव्यम्। **विलम्भस्त्विति**। ध्रुवाभोगविवर्जिता उद्ग्राहा बहव इत्यनेन धातुभेदाभावो मातुभेदश्च गम्यते। तेनैकधातुका भिन्नमातुका उद्ग्राहा एव बहवो गीयन्ते चेद्विलम्भो नाम लम्भभेदः। अत्रैकस्मिन्भेदे ध्रुवस्याभावेऽपि भेदान्तरेषु सद्भावात्तस्य न नित्यत्वहानिः। एवं मतान्तरोक्तेन सहाष्टौ लम्भकाः। अयं प्रबन्धस्तालाद्यनियमादनिर्युक्तः; आभोगस्य विकल्पत्वेन विषयेषु व्यवस्थितत्वात्। यत्राभोगसद्भावस्तत्र त्रिधातुः; यत्रत्वाभोगाभावस्तत्र द्विधातुः। विलम्भलक्षणे ध्रुवाभोगविवर्जिता इत्यनेन धात्वन्तराभावश्रुतावपि प्रबन्धस्य भेदगतत्वेनापि पाक्षिकमेकधातुत्वमापादयितुं न शक्यते। यत उद्ग्राहा बहव इत्युक्तम्; तेन ध्रुवस्थान उद्ग्राह एव तावत्प्रतिनिधित्वेन प्रयुक्त इति नैकधातुत्वम्।

**यो झोम्बडगतं लक्ष्म गमकस्थानकैर्विना ॥ १७६ ॥**
**भजते रासकः सोऽयं रासतालेन गीयते ।**
**गणैर्वर्णैश्च मात्राभिः केचिदेनं त्रिधा जगुः ॥ १७७ ॥**
**स्याद्रासवलयो हंसतिलको रतिरङ्गकः ।**
**चतुर्थस्तत्र मदनावतारश्छगणादिजाः ॥ १७८ ॥**

यदा तूद्ग्राह एवैकवारं द्विवारं वा प्रयुज्य त्यज्यते तदैष दोषः प्रसज्येत नान्यथेति । अयं पदतालबद्धत्वाद्व्यङ्गस्तारावलीजातिमान् ॥ १७०—१७५ ॥ इति लम्भकप्रबन्धः ॥

(सु०) लम्भकं लक्षयति—उद्ग्राह इति । यत्रोद्ग्राहो द्विर्गीयते सकृद्वा सर्व उद्ग्राहः । एकखण्डो द्विखण्डो वा क्रियते ध्रुवः ; सकृद्द्विर्वा आभागोऽप्येवम् ; ध्रुवे च समाप्तिः स लम्भकः । मतान्तरमाह—भाग इति । अस्मिंल्लम्भके तत्पूर्वोक्ते झोम्बडे खण्डतालानन्तरमुद्ग्राहसदृशो भागः प्रबन्धावयवः कर्तव्यः । ततोऽनन्तरं ध्रुव आभोगः, पुनर्ध्रुवो वा गेय इति । एतस्य भेदान्कथयति—उद्ग्राह इति । पूर्वोक्तस्य लम्भकस्योद्ग्राहस्तालेन विना यदा निबध्यते तदालापलम्भक इत्युच्यते । ध्रुवस्थाने यत्रान्यधातुको विसदृशो गेयः, उद्ग्राहो निबध्यते तदा प्रलम्भः । मतान्तरेणोक्तो भागो यत्रोपनिबध्यते स भागलम्भकः । यत्र भिन्नैरुद्ग्राहैः समन्वितान्ध्रुवकांस्त्रिवारं चतुर्वारं वा पञ्चवारं वा गीयते तदा पदमित्युच्यते । उद्ग्राहभेदे ध्रुवभेदे वा अनुलम्भः । ध्रुवोद्ग्राहभेदे तूपलम्भः । एते त्रयः पदलम्भानुलम्भोपलम्भा आभोगशून्याः ; यत्र ध्रुवाभागौ न स्तः, उद्ग्राहा बहवो विद्यन्ते स विलम्भः । एतेऽष्टौ लम्भका वक्ष्यमाणसालगसूडस्थैस्तालैराकलिता युक्ताः कर्तव्याः । इत्यष्टौ लम्भकाः ॥ १७१—१७५ ॥ इति लम्भकप्रबन्धः ॥

(क०) अथ रासकं लक्षयति—**यो झोम्बडगतं लक्ष्मे**त्यादिना । **छगणादिजा** इति । तत्र छगणजो रासवलयः ; पगणजो हंसतिलकः ;

षडक्षराङ्घ्रितस्त्रिंशदक्षरावधिवर्णजाः ।
पञ्चविंशतिराख्याताश्चरणादष्टमात्रिकात् ॥ १७९ ॥
षष्टिमात्रावधिप्रोक्तास्त्रिपञ्चाशत्तु मात्रिकाः ।
लक्ष्ये प्रसिद्धिवैधुर्यात्तेष्वस्माकमनादरः ॥ १८० ॥
द्विरुद्ग्राहो ध्रुवोऽपि द्विराभोगध्रुवकौ [1]ततः ।

चगणजो रतिरङ्गकः; तगणजो मदनावतार इत्यादिशब्दप्राह्या गणा द्रष्टव्याः । एवं गणजाश्चत्वारः; वर्णजाः पञ्चविंशतिः; मात्रिकास्त्रिपञ्चाशदिति रासा द्व्यशीतिर्भवन्ति । तालादिनियमादयं निर्युक्तो गमकस्थानकव्यतिरिक्तझोम्बडलक्षणातिदेशेन मेलापकाभावात्त्रिधातुः, पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ -१७६—१८० ॥ इति रासकप्रबन्धः ॥

(सु०) रासकं लक्षयति—य इति । यो गमकस्थानवर्जितं झोम्बडलक्ष्म भजते, रासतालेन गीयते स रास इत्युच्यते । मतान्तरेणास्य भेदान्निरूपयति—गणैरिति । गणैर्निबद्धो रासवलयः; वर्णैर्निबद्धो हंसतिलकः; मात्राभिर्निबद्धो रतिरङ्गकः; छगणेन पूर्वोक्तेनाधिकेन संयुक्तो मदनावतार इति । अन्यान्भेदानाह—षडक्षरेति । षडक्षरचरणमारभ्य त्रिंशदक्षरचरणपर्यन्ता एकैकाक्षरवृद्ध्या पञ्चविंशती रासा भवन्ति । कश्चित् षडक्षरचरणः; कश्चित्सप्ताक्षरचरणः; कश्चिदष्टाक्षरचरण इत्यादि । तथा अष्टमात्राचरणादारभ्यैकैकमात्रावृद्ध्या षष्टिमात्रापर्यन्तास्त्रिपञ्चाशन्मातृका मात्रागणभेदा रासा भवन्ति । एतेभ्योऽन्ये च लक्ष्येऽप्रसिद्धत्वान्नोक्ताः ॥ -१७६—१८० ॥ इति रासकप्रबन्धः ॥

(क०) अथैकताली लक्षयति— द्विरुद्ग्राह इत्यादिना । तत आभोगध्रुवकौ गीत्वेत्यनेन तयोः सकृद्गानं गम्यते । यतः पूर्वमेव ध्रुवोऽपि द्विरिति

[1] सकृत् ० इति सुधाकरपाठः .

गीत्वा न्यासो यत्र सा स्यादेकताल्येकतालिका ॥ १८१ ॥
अस्यामालापमात्रेण केचिदुद्ग्राहमूचिरे ।
बिरुदैर्वर्णतालेन वर्णः कर्णाटभाषया ॥ १८२ ॥
तालत्रैविध्यतस्तस्य त्रैविध्यं गदितं बुधैः ।

ध्रुवस्य द्विर्गानं विहितम् । अत्र द्विरित्यनुक्तत्वाच्च न्यास इति स्थानविशेषनिर्देशाभावेनोक्तेऽपि संनिहिते ध्रुवे न्यासः कर्तव्य इत्यवगम्यते । एकतालीति संज्ञा । **एकतालिकेति** । एकतालेन निर्वृत्तेत्यत्रार्थे ठकि विहिते रूपम् । **आलापमात्रेणेति** । आलापोऽत्र प्रयोगः । मात्रपदेन तस्य वाचकपदरहितत्वमुच्यते । केवलालापेनोद्ग्राहः कर्तव्य इति केषांचिन्मतम् । मतान्तरे तु वाचकपदैरेवोद्ग्राहः कर्तव्य इत्यर्थः । तालनियमान्नियुक्तोऽयं मेलापकाभावात्त्रिधातुः पदतालबद्धत्वेन द्व्यङ्गस्तारावलीजातिमान् ॥ १८१- ॥ इत्येकतालीप्रबन्धः ॥ इति सूडक्रमः ॥

(सु०) एकतालीं लक्षयति—द्विरिति । उद्ग्राहो ध्रुवश्च द्विर्गीयते ; आभोगध्रुवावर्धतः सकृद्गीत्वा, आभोगध्रुवाभ्यामन्यत्रोद्ग्राहो न्यासः समाप्तिः सैकतालीपनिबद्धैकतालिका । अस्यामुद्ग्राह आलापमात्रेणेति केषांचिन्मतम् ॥ १८१- ॥ इत्येकतालीप्रबन्धः ॥ इति सूडक्रमः ॥

(क०) अथालिक्रमेषु प्रथमोद्दिष्टं वर्णप्रबन्धं लक्षयति—**बिरुदैरित्यादिना** । **तालत्रैविध्यत इति** । तालस्य वर्णतालस्य त्र्यस्रमिश्रचतुरस्रत्वभेदेन वक्ष्यमाणत्वात्त्रैविध्यं तस्मात् । अत्रोद्ग्राहादीनामनुक्तावप्युद्ग्राहध्रुवयोः सकलप्रबन्धेषु नियतत्वात्तयोरावश्यकत्वेनात्र तौ बिरुदबद्धौ कर्तव्यौ । 'अनुक्ताभोगवस्तूनां पदैराभोगकल्पना' इति पत्र परिभाष्यमाणत्वादत्र पदैराभोगः कर्तव्यः । तेनायं त्रिधातुर्भवति । तालभाषानियमान्नियुक्तो

• 32

**स्वरैः पाटैः पदैस्तेनै रचना वाञ्छितक्रमात् ॥ १८३ ॥**
**यस्य स्यात्तेनकैर्न्यासः स वर्णस्वर उच्यते ।**
**स्वरादेरादिविन्यासभेदादेष चतुर्विधः ॥ १८४ ॥**

विरुदपदताल्वद्धत्वात्स्यून्नो भावनीजातिमान् ॥ -१८२—१८४ ॥ इति वर्णप्रबन्धः ॥

(सु०) सूडस्थान्प्रबन्धांल्लक्षयित्वा, आलिक्रमस्थांल्लक्षयिषुः प्रथमनिर्दिष्टं वर्णं लक्षयति—विरुदैरिति । वर्णतालेन कर्णाटभाषया विरुदैरुपनिबद्धमानो वर्ण इत्युच्यते । तालाध्याये वर्णतालस्य त्रैविध्यं लक्षयिष्यति । तदा वर्णस्यापि त्रैविध्यं ज्ञेयम् ॥-१८२—१८४ ॥ इति वर्णप्रबन्धः ॥

(क०) अथ वर्णस्वरं लक्षयति—**स्वरैः पाटैरित्यादिना** । **वाञ्छितक्रमाद्रचनेति** । अत्र स्वरपाटपदतेनानां क्रम ऐच्छिक इत्यर्थः । **स्वरादेरादिविन्यासभेदादिति** । स्वरस्यादौ विन्यासादेको भेदः; पाटस्यादौ विन्यासाद्द्वितीयः; पदस्यादौ विन्यासात्तृतीयः; तेनस्यादौ विन्यासाच्चतुर्थः; स्वरादिष्वेकैकस्मिन्नादौ विन्यस्ते तदन्येषां त्रयाणामनियमेन विन्यासो भवति । अत्र स्वरादिषु चतुर्षु द्वाभ्यामुद्ग्राहः कर्तव्यः । द्वाभ्यां ध्रुवः कर्तव्यः । आभोगस्तु पदैः कर्तव्यः । एवमयमपि त्रिधातुस्तालनियमान्नियुक्तो विरुदाभावात्पञ्चाङ्ग आनन्दिनीजातिमान् ॥ १८४- ॥ इति वर्णस्वरप्रबन्धः ॥

(सु०) वर्णस्वरं लक्षयति—स्वरैरिति । स्वरैः पाटैः पदैस्तैनैर्यस्य विरचितं स्वाभिलषितक्रमेण च न्यासः स वर्णस्वर इत्युच्यते । स चतुर्विधः; स्वराणामादावुपनिबन्धनेन चतुर्ष्वेको भेदः, पाटानामादिविरचनेन द्वितीयः, पदानामादिविरचनेन तृतीयः, तेनकानामादिविरचनेन चतुर्थ इति ॥ -१८२—१८४ ॥ इति वर्णस्वरप्रबन्धः ॥

गद्यं निगद्यते छन्दोहीनं पदकदम्बकम् ।
तत्पोद्धोत्कलिका चूर्णं ललितं वृत्तगन्धि च १८५ ॥
खण्डं चित्रं च तेषां च प्रभवः सामवेदतः ।
गातव्योत्कलिका वीरे रक्ता रुद्राधिदेवता ॥ १८६ ॥
गौडीयरीतिरुचितां वृत्तिमारभटीं श्रिता ।
चूर्णं शान्ते रसे पीतं गातव्यं ब्रह्मदैवतम् ॥ १८७ ॥
वैदर्भरीतिसंपन्नं सात्त्वतीं वृत्तिमाश्रितम् ।
सितं मदनदैवत्यं शृङ्गाररसरञ्जितम् ॥ १८८ ॥
ललितं कैशिकीं वृत्तिं पाञ्चालीं रीतिमाश्रितम् ।
वृत्तगन्धि रसे शान्ते पीतं च मुनिदैवतम् ॥ १८९ ॥
पाञ्चालरीतौ भारत्यां पद्यभागविमिश्रितम् ।
खण्डं गणेशदैवत्यं सात्त्वतीं वृत्तिमाश्रितम् ॥ १९० ॥
श्वेतं हास्यकृतारब्धं वैदर्भीभङ्गिसंभवम् ।
शृङ्गारे वैष्णवं चित्रं चित्रकैशिकवृत्तिजम् ॥ १९१ ॥
वैदर्भ्या रचितं रीत्या नानारीतिविचित्रया ।
वेणी मिश्रमिति प्राहुरन्ये भेदद्वयं परम् ॥ १९२ ॥
वेणी सर्वैः कृता मिश्रं चूर्णकैर्वृत्तगन्धिभिः ।

(क०) अथ गद्यं लक्षयति—**गद्यं निगद्यत** इत्यादिना । **चित्रकैशिकवृत्तिजमिति** । कैशिकीचासौ वृत्तिश्चेत्यत्र 'स्त्रियाः पुंवत्' इति सूत्रेण पुंवद्भावे कैशिकवृत्तिरिति कर्मधारयः । चित्रा चासौ कैशिकवृत्तिश्चेत्यत्रापि पूर्ववत्समासपुंवद्भावौ ; कैशिकवृत्तेश्चित्रत्वं भारत्यादिभिर्वृत्त्यन्तरैः सह सांकर्येणेति वेदितव्यम् । तस्या जातमिति तथोक्तम् । **वेणी सर्वैः**

द्रुता विलम्बिता मध्या द्रुतमध्या तथा परा ॥ १९३ ॥
गतिर्द्रुतविलम्बा स्यात्षष्ठी मध्यविलम्बिता ।
इति गद्यस्य षट्प्रोक्ता गतयः पूर्वसूरिभिः ॥ १९४ ॥
लघुभिर्बहुलैरल्पैः समैराद्यत्रयं क्रमात् ।
पृथग्लगत्वे मिश्रैस्तु लगैस्तद्वत्परं त्रयम् ॥ १९५ ॥
प्रत्येकं गतिषट्केण षट्त्रिंशद्गद्यजा भिदाः ।
प्रणवाद्यमतालं च गणकैरखिलैर्युतम् ॥ १९६ ॥

**कृते**ति । सर्वैः कलिकादिभिः षड्भिर्भेदैः कृता वेणी । वृत्तगन्धिभिश्चूर्णकैः कृतं मिश्रम् । द्रुतादिगतिषट्कं लक्षयति—**लघुभिरित्यादि** । बहुलैर्लघुभिर्द्रुता; स्वल्पैर्लघुभिर्विलम्बिता; समैर्लघुभिर्मध्येति क्रमः । अत्र लघोः प्रतियोगित्वेन गुरुर्द्रष्टव्यः; तस्याल्पत्वबहुत्वसमत्वानि द्रुतादिगतिषु क्रमेण कर्तव्यानीत्यर्थः । **पृथग्लगत्व** इत्यादि । अत्र लघूनां गुरूणां च पृथग्भूतानां भावः पृथग्लगत्वम्; तस्मिन्सति तद्वत्पूर्ववत्; अपृथग्भूतत्वेनेत्यर्थः । एवं मिश्रैर्लगैस्तु परं त्रयं द्रुतमध्यादिकं गतित्रयं भवति । अयमर्थः—प्रथमार्धे लघूनेव प्रयुज्य द्वितीयार्धे गुरवः प्रयुज्यन्ते चेत्तदा द्रुतविलम्बितागतिः स्यात्; पूर्वार्धे पूर्ववत्समत्वेन मिश्रिता लगाः प्रयुज्यन्ते चेत्तदा द्रुतमध्यागतिर्भवति; प्रथमार्धे लघूनेव प्रयुज्य द्वितीयार्धे गुरवः प्रयुज्यन्ते चेत्तदा मध्यविलम्बितागतिर्भवतीति । एवं कलिकादयः षड्भेदाः प्रत्येकं गतिभेदेन षड्विधाः सन्तः षट्त्रिंशद्गद्यानि भवन्तीत्याह—**प्रत्येकमित्यादि** । सकलभेदानुगतं सामान्यलक्षणमाह—**प्रणवाद्यमित्यादि** । प्रणव ओंकारः, अतालं तालरहितम्, अखिलैर्गणकैस्तिरिपादिभिः पञ्चदशभिः; वर्णैश्चेत्यत्राप्यखिलैरिति विशेषणीयम् । अत्र वर्णशब्देन स्थायादयश्चत्वारो वर्णा उच्यन्ते । तैश्च युतमिति चकारार्थः । अतालशब्दानामन्ते ऽन्वरा-

वर्णैश्चातालशब्दानां स्वरैरन्तेऽन्तरान्तरा ।
प्रबन्धाङ्कं सतालं च पदद्वंद्वं पृथक्ततः ॥ १९७ ॥
द्विर्गीत्वा गीयते यत्र प्रयोगोऽपि विलम्बितः ।
गातृनाम सतालं च सतालं वर्ण्यनाम च ॥ १९८ ॥

न्तरा स्वरैर्युतमित्यन्वयः । अतालशब्दानां तालरहितानां वाचकपदानामन्तेऽवसाने समाप्ताविल्यर्थः; अन्तरान्तरा मध्ये मध्ये पदावसानेष्वित्यर्थः । अत्र स्वरैः सरिगादिभिर्युतं यथा तथा गातव्यमित्यर्थः । ततोऽनन्तरं प्रबन्धनामाङ्कितं सतालं येन केनापि तालेन सहितं पदद्वंद्वमवान्तरानेकपदसमुदायात्मकमेकैकविभक्त्यन्तमेकैकक्रियया समन्वितं वा शब्दरूपद्वितयम्; पृथग्द्विर्गीत्वेत्यनेन प्रथमपदं द्विवारं गीत्वा द्वितीयपदमपि द्विवारं गायेदित्यर्थः । प्रबन्धाङ्कितमित्यस्य पदद्वंद्वस्य समुदायविशेषणत्वेन द्वयोः पदयोरेकतरस्मिन्प्रबन्धस्य नामाङ्कयेदित्यर्थः । सतालमित्यस्यापि तथात्वेन द्वयोरेक एव तालः कर्तव्य इत्यर्थः । यत्रेति । यस्मिन्गाये । **प्रयोगोऽपि विलम्बितो गीयत** इति । अत्रापिशब्दः समुच्चये; तेन प्रयोगस्यापि पदद्वयस्य तालप्रयुक्तत्वं द्योत्यते । अत एव विलम्बित इति लयनियम उक्तः । अनेन पदद्वयस्यापि विलम्बितत्वं सूचितं भवति । **गातृनाम सतालं** चेति । प्रयोगानन्तरं गातृनाम वाग्गेयकारः स्वनाम निबध्नीयादित्यर्थः । पुनः सतालमिति विशेषणेन प्रयोगकृतात्तालादन्यस्तालः कर्तव्य इत्यर्थः । अथवा पूर्व एव तालो लयान्तरेण प्रयोक्तव्य इत्यवगन्तव्यम् । **पुनरप्यविलम्बितं गीत्वे**ति । अविलम्बितं द्रुतं यथा भवति तथा । अत्र विलम्बितान्यत्वेन मध्यस्य च ग्राह्यत्वेऽप्यविलम्बितपदेन हठाद्द्रुतप्रतीतेः स एव गृह्यते । पुनर्द्विर्गीत्वेत्यत्र गेयविशेषानुक्तेः पूर्वोक्तक्रमेण सकल एव प्रबन्धः पुनर्गेय

**विलम्बितेन मानेन पुनरप्यविलम्बितम् ।**
**गीत्वा विलम्बितालेन न्यासो गद्यं तदिष्यते ॥ १९९ ॥**

इति गम्यते । **विलम्बितालेन न्यास** इति । विलम्बितालस्य प्रथमं पदद्वये प्रयुक्तत्वात्तत्र पदद्वयादौ तालेनेति तृतीया तालापवर्गे न्यासः कर्तव्य इति गम्यते । प्रथमपदस्यादिमारभ्य विलम्बितलयान्वितं तालमेकवारं प्रयुज्य न्यासं कुर्यादित्यर्थः । अत्र गद्यप्रबन्धे तालरहितो भाग उद्ग्राहत्वेन ग्राह्यः । पदद्वयात्मकः सतालः पृथग्द्विरावृत्तो भागो ध्रुवत्वेन ग्राह्यः । प्रयोगादिः सतालश्चरमो भाग आभोगत्वेन ग्राह्य इत्यनुक्तोऽप्युद्ग्राहादिविभागश्चैवमूहनीयः । अतोऽयं त्रिधातुस्तालाद्यनियमादनिर्युक्तः पदस्वरतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ १८५—१९९ ॥ इति गद्यप्रबन्धः ॥

(सु०) गद्यं लक्षयति—गद्यमिति । छन्दोहीनपदकम्बकं गद्यमित्युच्यते । तत् षट्प्रकारम्—उत्कलिका, चूर्णकम्, ललितम्, वृत्तगन्धि, खण्डम्, चित्रं चेति । तेषां सामवेदादुत्पत्तिः । एतेषां लक्षणान्याह—गातव्येति । उत्कलिका वीररसे गेया; रक्ता रक्तवर्णा, रुद्रदेवत्या, वर्णदेवताकथनमुपास्यत्वेन प्राशस्त्यार्थम् । गौडीया रीतिर्यस्यां सा गौडीयरीतिः; उचितां वीररसोचितामारभटीं वृत्तिमाश्रिता । चूर्णं लक्षयति—चूर्णमिति । शान्ते रसे चूर्णं गातव्यम् । तत्र पीतो वर्णः, ब्रह्मा देवता, वैदर्भी रीतिः, सात्त्वती वृत्तिः । ललिताख्ये गद्ये, सितो वर्णः, मदनो देवता, शृङ्गारो रसः, कैशिकी वृत्तिः, पाञ्चाली रीतिः । वृत्तगन्धिनि गद्ये, शान्तो रसः, पीतो वर्णः, मुनिर्देवता, पाञ्चाली रीतिः, भारती वृत्तिः, परं तु तत्पद्यादयः, तेन विमिश्रितं कर्तव्यम् । खण्डे गद्ये, गणेशो देवता, सात्त्वती वृत्तिः, श्वेतो वर्णः, हास्यो रसः, सात्त्वतीसहिता वैदर्भी रीतिः । चित्रे गद्ये, शृङ्गारो रसः, विष्णुर्देवता, कैशिकी वृत्तिः, वैदर्भी रीतिः । मतान्तरेण भेदद्वयमाह—वेणीति । तदेव भेदद्वयं लक्षयति—वेणीसर्वैरिति । सर्वैः पूर्वोक्तैः षड्भिर्गद्यैर्विरचिता वेणीत्युच्यते । चूर्णैर्वृत्तगन्धिभिर्मिश्रितैर्विरचितं मिश्रमित्यु-

**पाटैः स्यातां ध्रुवोद्ग्राहौ कैवाडे न्यसनं ग्रहे ।**
**सार्थकैरर्थहीनैश्च पाटैः स द्विविधो मतः ॥ २०० ॥**
**स शुद्धैर्मिश्रितैः पाटैः शुद्धो मिश्र इति द्विधा ।**

च्यते । क्रमेण गद्यषट्के गतिमाह—**द्रुतेति** । उत्कलिकायां द्रुता गतिः, चूर्णे विलम्बिता गतिः, ललिते मध्या गतिः, वृत्तगन्धिनि द्रुतमध्या गतिः, खण्डे द्रुतविलम्बिता गतिः, चित्रे मध्यविलम्बिता गतिरिति । **बहुभिरिति** । बहुभिर्लघुभिरुत्कलिका कर्तव्या, अल्पैर्लघुभिश्चूर्णकम्, समैर्लघुभिर्ललितम् । पृथक् स्थितैर्लघुभिर्वृत्तगन्धि, पृथक्स्थितैर्गुरुभिः खण्डम्, मिश्रितैश्चित्रमिति । एतानि षडुक्तषड्विधगतियुक्तत्वेन षड्विधत्वे षट्त्रिंशत् (३६) भेदाः । तेषां गानप्रकारमाह—**प्रणवाद्यमिति** । प्रबन्धाङ्कं पूर्वं गायेत् । उद्ग्राहरूपमित्यर्थः । तस्य विशेषणानि प्रणवाद्यमित्यादीनि । प्रणव ओंकार आदौ यस्य, अतालं तालवर्जितम्, सर्वैरपि गमकैर्युक्तम्, अतालशब्दानां वर्णैः पादाक्षरैर्युक्तम्, अन्ते मध्ये च स्वरैर्युक्तमेवंविधं प्रबन्धकम्; ततः सतालं पदद्वयं पृथग्द्विर्गीत्वा विलम्बितः प्रयोगो गमकसंदर्भो गीयते । ततो ऽनन्तरं सतालं गातुर्वाग्गेयकारस्य वर्ण्यस्य नायकस्य नाम, तच्च विलम्बितमानेन; ततोऽनन्तरं तदेव गीत्वा नायकयोर्नामाविलम्बितं गीत्वा पुनरपि विलम्बितेन समाप्तिर्यत्र तद्गद्यमित्युच्यते ॥ १८९—१९९ ॥ इति गद्यप्रबन्धः ॥

(क८) अथ कैवाडं लक्षयति—**पाटैः स्यातामिति** । ध्रुवोद्ग्राहाविल्यत्र पाठक्रमो न विवक्षितः; किं तु 'अग्निहोत्रं जुहोति, यवागूं पचति' इतिवदर्थक्रमोऽनुसंधेयः । यथा तत्र यवागूपाकात्पूर्वं द्रव्याभावाद्धोमस्यासंभवस्तथेहाप्युद्ग्राहात्पूर्वं गीतारम्भाभावाद्ध्रुवस्यासंभव एव वृत्तानुरोधेन तत्रैव पाटाः कृता इति मन्तव्यम् । **न्यसनं ग्रह इति** । गृह्यत इति ग्रहः; ग्रहशब्देनात्रोद्ग्राह उच्यते; तत्र न्यासः कर्तव्यः । **कैवाड** इति करपाटप्रधानत्वात्तद्भवो ऽपभ्रंशपदेनेयं संज्ञा; करपाटास्तु **वाद्या**-

वीररौद्राश्रितैर्बद्धा विरुदैरङ्कचारिणी ॥ २०१ ॥
वर्ण्यनामाङ्किताभोगा तालेनेष्टेन गीयते ।
वासवी कलिका वृत्ता ततो वीरवती भवेत् ॥ २०२ ॥

ध्याये वक्ष्यन्ते । स शुद्धैर्मिश्रैः पाटैरित्यत्र पाटानां शुद्धत्वं मुखवाद्याक्षरामिश्रितत्वम्; मिश्रितत्वं तु मिश्रत्वम्; तत्सहितत्वमित्यर्थः । एवं सार्थकः शुद्धकैवाड एकः; अर्थहीनः शुद्धकैवाडो द्वितीयः; सार्थकमिश्रकैवाडस्तृतीयः; अर्थहीनमिश्रकैवाडश्चतुर्थ इति चतुर्धा भवति । अत्र नेतृगातृप्रबन्धनामाङ्कितैः पदैराभोगो गातव्यः । तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः पाटपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २००- ॥ इति कैवाडप्रबन्धः ॥

(सु०) कैवाडं लक्षयति—पाटैरिति । पाटाक्षरैर्ध्रुवोद्ग्राहौ कर्तव्यौ । ग्रह उद्ग्राहे समाप्तिर्यस्य स कैवाडः । स च द्विविधः; सार्थकैः पाटैरेकः; अनर्थकैर्द्वितीय इति । पुनरपि द्वितीयः शुद्धो मिश्र इति द्विविधः । केवलैः पाटैर्विरचितः शुद्धः; पदस्वरादिभिर्मिश्रितैः पाटैर्मिश्र इति ॥ २००- ॥ इति कैवाडप्रबन्धः ॥

(क०) अथाङ्कचारिणीं लक्षयति—वीररौद्रेति । केवलं विरुदैरित्युक्ते शृङ्गाराद्याश्रितान्यपि विरुदानि प्रसज्यन्ते । तद्व्यवच्छेदाय वीररौद्राश्रितैरिति विशेषणम् । अत्र वीरशब्देन दानवीरो दयावीरो युद्धवीर इति त्रिविधो ऽपि गृह्यते । तेन त्रिविध वीराश्रितानि विरुदानि ग्राह्याणि । एवंविधैर्विरुदैरुद्ग्राहध्रुवौ बध्नीयादित्यर्थः । वर्ण्यनामाङ्किताभोगेति । अत्र वर्ण्यनामेति गातृप्रबन्धनाम्नोरप्युपलक्षणम् । तेनाभोगो वर्ण्यादित्रितयनामाङ्कितैः पदैः कर्तव्यः । तद्भेदानाह—वासवीत्यादि । यत्रैकेन तालेनाष्टौ

वेदोत्तरा जातिमती षट्प्रकारेति सा मता ।
एकद्वित्रिचतुष्पञ्च ताला: स्युर्विरुदानि तु ॥ २०३ ॥
अष्टौ षोडश तद्वच्च द्वात्रिंशद्द्व्यधिका क्रमात् ।
पञ्चाशच्च चतुर्युक्तं शतमाद्यासु पञ्चसु ॥ २०४ ॥
नियमो जातिमत्यां तु न तालविरुदाश्रयः ।

विरुदानि गीयन्ते सा वासवी; यत्र द्वाभ्यां तालाभ्यां षोडश विरुदानि गीयन्ते सा कलिका; यत्र त्रिभिस्तालैर्द्वात्रिंशद्विरुदानि गीयन्ते सा वृत्ता; यत्र चतुर्भिस्तालैर्द्व्यधिकपञ्चाशद्विरुदानि गीयन्ते सा वीरवती; यत्र पञ्चभिस्तालैश्चतुर्युक्तं शतं बिरुदानि गीयन्ते सा वेदोत्तरा; एवमाद्यासु पञ्चसु योजनीयम् । **जातिमत्यां तु तालविरुदाश्रयो नियमो नेति** । तालविरुदाश्रयो नियमो नास्तीत्यर्थः । तेनाद्यासु पञ्चस्वपि तालादिसंख्या नियम एव । न तालादिस्वरूपनियमः । अतो ऽयमनिर्युक्तो मेलापकाभावात्त्रिधातुर्विरुदपदतालबद्धत्वात्स्यूङ्गो भावनीजातिमान् ॥ -२०१—२०४- ॥ इत्यङ्कचारिणीप्रबन्धः ॥

(सु०) अङ्कचारिणीं लक्षयति—**वीररौद्राश्रयैरिति** । विरुदैर्येन केनचित्तालेन निबद्धा अङ्कचारिणी । वर्ण्यस्य नायकस्य नाम्नाङ्कित आभोगो यस्याः, तथाविधा कर्तव्या । सा च षट्प्रकारा; वासवी, कलिका, वृत्ता, वीरवती, वेदोत्तरा, जातिमतीति । एतासां लक्षणमाह—एकेति । आद्यासु पञ्चस्वेकादितालनियमः । अष्टादिविरुदनियमः । अत एकस्तालः, अष्टौ बिरुदानि यस्यां सा वासवी; द्वौ तालौ, षोडश विरुदानि यास्यां सा कलिका; त्रयस्तालाः, द्वात्रिंशद्विरुदानि यस्यां सा वृत्ता; चत्वारस्तालाः, द्विपञ्चाशद्विरुदानि यस्यां सा वीरवती; पञ्च तालाः, चतुरधिकं शतं विरुदानि यस्यां सा वेदोत्तरेति । अन्त्या जातिमती तालविरुदानामाश्रयो न भवति ॥ -२०१—२०४- ॥ इत्यङ्कचारिणीप्रबन्धः ॥

कर्णाटादिपदैः पाटैर्बिरुदैस्तालवर्जितः ॥ २०५ ॥
आर्यागीतौ रसे वीरे कन्दः स्यात्पाटमुक्तिकः ।
पवनो रविसंज्ञश्च धनदो हव्यवाहनः ॥ २०६ ॥
सुरनाथः समुद्रश्च वरुणः शशिशैलकौ ।
मधुमाधवनामानौ ततोऽपि मकरध्वजः ॥ २०७ ॥
जयन्तो मधुपश्चाथ शुकसारसकेकिनः ।
हरिश्च हरिणो हस्ती कादम्बः कूर्मको नयः ॥ २०८ ॥

(क०) अथ कन्दं लक्षयति—**कर्णाटादी**त्यादि । कर्णाटादिपदैरित्यनेन देशभाषापदान्येव गृह्यन्ते । न संस्कृतपदानि । **आर्यागीता**विति । आर्यागीतेर्हि लक्षणं **छन्दोविचितौ**—'प्रथमार्धसमा गीतिः' इति । अस्यार्थः—द्वितीयमर्धं प्रथमार्धेन समं यस्याः सा आर्यागीतिरिति । उदाहरणं च—

'मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः ।
गीतिः पौरवधूनां मधुरा कुसुमायुधं विबोधयति ॥' इति ॥

**वृत्तरत्नाकरे**ऽपि—

'आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥'

इत्येतल्लक्षणमुदाहरणं च । आर्यायां तावत्प्रथमार्धे त्रिंशन्मात्राः; द्वितीयार्धेऽष्टाविंशतिर्मात्राः । आर्यागीतौ तु द्वितीयार्धे ऽपि त्रिंशन्मात्रा भवन्तीत्यर्थः । एवंविधायामार्यागीतौ प्रथमार्धमुद्ग्राहं कृत्वा पदैर्गायेत् । द्वितीयार्धं ध्रुवं कृत्वा पाटैर्बिरुदैश्च गायेदित्यर्थः । **पाटमुक्तिक** इति । ध्रुवाख्यस्य द्वितीयार्धस्यादौ पाटानुपक्रम्य न्यासं कुर्यादित्यर्थः । **तालवर्जित** इति । तालस्व-

**विनयो विक्रमोत्साहौ धर्मार्थः काम इत्यमी ।**
**एकोनत्रिंशदाख्याताः कन्दभेदाः पुरातनैः ॥ २०९ ॥**
**त्रिंशाद्गुरोरा द्विगुरोः क्रमादेकैकभञ्जतः ।**

रूपेण शून्यो गेय इत्यर्थः । न तालनियमशून्य इति विवक्षितः । आभोगमपि सामान्यन्यायेन पदैः कल्पयेत् । कन्दस्य सामान्यलक्षणमुक्त्वा तद्भेदान्दर्शयति—**पवन** इत्यादिना । तेषां लक्षणानि संक्षिप्याह—**त्रिंशाद्गुरोरा द्विगुरोः क्रमादेकैकभञ्जत** इति । तमडागमे च विहिते यदा तमडभावस्तदा डिलोपे सति त्रिंश इति रूपम् । त्रिंशादिति ल्यब्लोपे पञ्चमी । त्रिंशमारभ्येत्यर्थः । **आ द्विगुरोरिति** । द्वितीयो गुरुर्द्विगुरुस्तत्पर्यन्तं द्विगुरोरा । **एकैकभञ्जत** इति । एकमेकं गुरुं द्वौ द्वौ लघू कृत्वेत्यर्थः । **क्रमादिति** । त्रिंशद्गुर्वात्मिकायामार्यागीतौ त्रिंशस्य गुरोर्भङ्गात्पवनो नाम कन्दभेदः; एकोनत्रिंशस्य भङ्गाद्रविसंज्ञकः; अष्टाविंशस्य भङ्गाद्धनदः; सप्तविंशस्य भङ्गाद्धव्यवाहनः; षड्विंशस्य भङ्गात्सुरनाथः; पञ्चविंशस्य भङ्गात्समुद्रः; चतुर्विंशस्य भङ्गाद्वरुणः; त्रयोविंशस्य भङ्गाच्छशी; द्वाविंशस्य भङ्गाच्छैलकः; एकविंशस्य भङ्गान्मधुः; विंशस्य भङ्गान्माधवः; एकोनविंशस्य भङ्गान्मकरध्वजः; अष्टादशस्य भङ्गाज्जयन्तः; सप्तदशस्य भङ्गान्मधुपः; षोडशस्य भङ्गाच्छुकः; पञ्चदशस्य भङ्गात्सारसः; चतुर्दशस्य भङ्गात्केकी; त्रयोदशस्य भङ्गाद्धरिः; द्वादशस्य भङ्गाद्धरिणः; एकादशस्य भङ्गाद्धस्ती; दशमस्य भङ्गात्कादम्बः; नवमस्य भङ्गात्कूर्मकः; अष्टमस्य भङ्गान्नयः; सप्तमस्य भङ्गाद्विनयः; षष्ठस्य भङ्गाद्विक्रमः; पञ्चमस्य भङ्गादुत्साहः; चतुर्थस्य भङ्गाद्धर्मः; तृतीयस्य भङ्गादर्थः; द्वितीयस्य भङ्गात्काम इति । एवमेकोनत्रिंशत्कन्दभेदा आख्याताः । एकैकभञ्जत इत्यनेनैकस्यैव गुरोर्भङ्गेन लघुद्वयरूपता । इतरेषां गुरुरूपतैव । आ द्विगुरोरित्यनेनाद्यगुरोर्भङ्गो न

**हयलीलेन तालेन हयलीला द्विधा च सा ॥ २१० ॥**
**गद्यजा पद्यजा चेति पद्यजा तु चतुर्विधा ।**

कर्तव्य इत्यर्थः । छन्दोनिबद्धत्वादयं निर्युक्तः; मेलापकाभावात्त्रिधातुः; पदपाटबिरुदबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ -२०५—२०९- ॥

(सु०) कन्दं लक्षयति—**कर्णाटादिपदैरिति** । कर्णाटादिभाषापदैः पाटैर्वाद्याक्षरैर्बिरुदैश्च, तालवर्जितोऽतालः, आर्यागीतावार्यागीतिसंज्ञके छन्दसि, वीररसे यो विरच्यते स कन्द इत्युच्यते । तस्य पाटिः समाप्तिः । आर्यागीतिलक्षणमुक्तं **वृत्तरत्नाकरे**—

‘आर्याप्रथमदलोक्तं यदि कथयति लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥’ इति ।

तस्य कन्दस्य भेदानाह—**पवन** इति । पवनादिकामपर्यन्ता एकोनत्रिंशद्भेदा भवन्ति । तेषां लक्षणमाह—**त्रिंशद्गुरोरिति** । त्रिंशद्गुरुमारभ्यैकैकन्यूनता द्विगुरुपर्यन्ताः पवनादयो ज्ञातव्याः । त्रिंशद्गुरुः पवनः; एकोनत्रिंशद्गुरू रविः; अष्टाविंशतिगुरुर्वनदः; सप्तविंशतिगुरुर्हव्यवाहनः; षड्विंशतिगुरुः सुरनाथः; पञ्चविंशतिगुरुः समुद्रः; चतुर्विंशतिगुरुर्वरुणः; त्रयोविंशतिगुरुः शशी; द्वाविंशतिगुरुः शैलः; एकविंशतिगुरुर्मधुः; विंशतिगुरुर्माधवः; एकोनविंशतिगुरुर्मकरध्वजः; अष्टादशगुरुर्जयन्तः; सप्तदशगुरुर्मधुपः; षोडशगुरुः शुकः; पञ्चदशगुरुः सारसः; चतुर्दशगुरुः केकी; त्रयोदशगुरुर्हरिः; द्वादशगुरुर्हरिणः; एकादशगुरुर्हस्ती; दशगुरुः कादम्बः; नवगुरुः कूर्मकः; अष्टगुरुर्नयः; सप्तगुरुर्विनयः; षड्गुरुर्विक्रमः; पञ्चगुरुरुत्साहः; चतुर्गुरुर्धर्मः; त्रिगुरुरर्थः; द्विगुरुः काम इति ॥ -२०५—२०९- ॥ इति कन्दप्रबन्धः ॥

(क०) अथ तुरगलीलां लक्षयति—**हयलीलेन तालेनेत्यादि** । ‘विरामान्तद्रुतत्रयात्, द्रुतौ तुरगलीलः स्यात्’ इति हयलीलातालस्य लक्षणं वक्ष्यते तदिहानुसंधेयम् । **पद्यजेति** । पद्यं पादबद्धं पदकदम्बकम्;

पूर्वार्धमुत्तरार्धं वा द्विधा तालयुतं यदि ॥ २११ ॥
आर्यायाः स्युस्तदा तिस्रश्चतुर्थी त्वादिमे दले ।
स्वरैः पदैस्तु विरुदैः सताले रचिता मता ॥ २१२ ॥
केचित्तु हयलीलेन छन्दसा तां विदुर्बुधाः ।

यथोक्तं 'पद्यं चतुष्पदे तच्च' इति । गद्यं त्वपादबद्धम् । **पूर्वार्धमित्यादि ।** **आर्याया** इति—

'लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं च नलघु वा प्रथमार्धे नियतमार्यायाः ॥'

इत्येवमादिलक्षणयुक्तम्; एवंविधलक्षणरूपाया आर्यायाः पूर्वार्धं तालयुक्तं चेदेका हयलीला; उत्तरार्धं वा तालयुक्तं चेद्द्वितीया । द्वयोरेकस्मिंस्तालयुते ऽन्यत्तालहीनमित्यर्थः । द्वे वा पूर्वोत्तरार्धे वा यदि तालयुते तदा तृतीया । **चतुर्थी त्विति ।** आदिमे दले प्रथमार्धे सतालैः स्वरैः पदैर्विरुदैश्च रचिता चतुर्थी हयलीला मता । अत्र तुशब्देनाद्यानां तिसृणां केवलपदरचितत्वं द्योत्यते । एवं पद्यजाश्चतस्रः । **केचित्त्वित्यादि । हयलीलेन छन्दसेति ।** तस्य लक्षणं तु विकृतौ छन्दसि—

'अश्वललितं न्जौ भ्जौ भ्लौ ग्रुद्रादित्याः' । इति

अस्यार्थः—यस्य पादे नकारजकारौ भकारजकारौ पुनर्भकारजकारौ भकारलकारौ गकारश्च भवति तद्वृत्तमश्वललितं नामेति; अश्वललितमेव हयलीलम् । एकादशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम्—

'पवनविधूतवीचिचपलं विलोकयति जीवितं तनुभृताम् ।
वपुरपि हीयमानमनिशं जरावनितया वशीकृतमिदम् ॥
सपदि निपीडनव्यतिकरं यमादिवनराधिपान्नरपशोः ।
परवनितामवेक्ष्य कुरुते तथापि हतबुद्धिरश्वललितम् ॥' इति ॥

**तालेन गजलीलेन गजलीला निगद्यते ॥ २१३ ॥**
**छन्दोहीनेतरल्लक्ष्म हयलीलागतं मतम् ।**

एवंविधं हयलीलं छन्द आर्यास्थाने प्रयुज्य पूर्वार्धमुत्तरार्धं चेत्यादिषु भेदेषु पूर्ववत्कृतेषु मतान्तरेणापि चतस्रः; गद्यजया सहैवं नव हयलीला भवन्ति । नवानामपि तालस्तु हयलील एव । अत्रार्याया हयलीलाच्छन्दसो वा पूर्वार्धं गद्यस्य पूर्वभागो वोद्ग्राहः कल्पनीयः । तदुत्तरार्धं तदुत्तरभागो वा ध्रुवः कल्पनीयः । अत्राभोगस्यानुक्तत्वाद्गातृनेतृप्रबन्धनामाङ्कितैः पदैराभोगः कर्तव्यः । तेनायं त्रिधातुः; छन्दस्तालनियमत्वान्निर्युक्तः; कचित्स्वरपदबिरुदतालबद्धत्वाच्चतुरङ्गो दीपनीजातिमान्; कचित्पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ -२१०—२१२- ॥ इति हयलीलाप्रबन्धः ॥

(सु०) तुरगलीलां लक्षयति—हयलीलेनेति । वक्ष्यमाणेन हयलीलेन तालेन या विरच्यते सा हयलीलेति । सा द्विधा—पद्यजा गद्यजेति । तत्र पद्यजा चतुर्भेदा; तानेव भेदान्कथयति—पूर्वार्धमिति । पूर्वार्धमेव तालसंयुक्तं चैको भेदः, उत्तरार्धमेव तालसंयुक्तं चैको भेदः; द्वे पूर्वार्धापरार्धे तालसंयुक्ते चेदेको भेदः; भेदत्रये ऽप्यार्यात्रयेण भवितव्यम् । चतुर्थभेदं लक्षयति—**चतुर्थी त्विति ।** चतुर्थी तुरगलीला । आदिमेऽर्धे स्वरैर्विरच्यते परेऽर्धे बिरुदैः समानैर्विरच्यते; अर्धद्वयमपि सतालेन; एवं चत्वारो भेदाः । मतान्तरमाह—**केचिदिति** । तां पूर्वजां तुरगलीलां हयलीलेन छन्दसा केचिद्वदन्ति । एवं पद्यजाष्टविधा, गद्यजैकेति नव भेदाः ॥ -२१०—२१२- ॥ इति तुरगलीलाप्रबन्धः ॥

(क०) अथ गजलीलां लक्षयति—**तालेन गजलीलेनेत्यादिना ।** 'गजलीले विरामान्तमुक्तं लघुचतुष्टयम्' इति वक्ष्यमाणलक्षणेन तालेन निबद्धा गेयेत्यर्थः । **छन्दोहीनेतरदिति** । हयलीलाच्छन्दसा हीनमितरल्लक्ष्म प्रथमं गद्यपद्यजत्वेन द्विविधम् । पद्यजाया आर्यावृत्ताश्रयणेन चतुर्विधत्वं

शुद्धा खण्डा च मात्रादिः संपूर्णेति चतुर्विधा ॥ २१४ ॥
द्विपदी करुणाख्येन तालेन परिगीयते ।
पादे छः पञ्च भा गोऽन्ते जौस्तः षष्ठद्वितीयकौ ॥ २१५ ॥
चतुर्भिरीदृशैः पादैः शुद्धा द्विपदिकोच्यते ।
अर्धान्तेऽन्ये स्वरानाहुः खण्डा स्याच्छुद्धयार्धया ॥ २१६ ॥
षष्ठेनैकेन गुरुणा मात्राद्विपदिका मता ।

च, हयलीलागतं लक्षणं मतमत्राप्यनुसंधेयमित्यर्थः । तेन गजलीलाः पञ्च भवन्ति । अनयोर्लीलापदार्थप्राधान्यात्स्त्रीलिङ्गतया निर्देशः । निर्युक्तत्वादिकं हयलीलावद्द्रष्टव्यम् ॥ -२१३- ॥ इति गजलीलाप्रबन्धः ॥

(सु०) गजलीलां लक्षयति—तालेनेति । गजलीलेन तालेन गजलीला कर्तव्या छन्दो विहाय ; अन्यल्लक्षणं पूर्वोक्तहयलीलावत् ; गद्यपद्यजादिभेदा अपि पूर्ववज्ज्ञातव्याः ॥ -२१३- ॥ इति गजलीलाप्रबन्धः ॥

(क०) अथ द्विपदीं भेदपूर्वकं लक्षयति—**शुद्धेत्यादि । करुणाख्येन तालेनेति** । 'गुरुणा करुणो मतः' इति करुणताललक्षणं वक्ष्यते । तत्र शुद्धाया लक्षणमाह—**पादे छ इत्यादि** । पादे चतुर्षु पादेष्वेकस्मिश्छश्छगणः, षण्मात्रिको मात्रागणः । पञ्च भाः, भगणा आदिगुरवो वर्णगणाः पञ्च प्रयोक्तव्याः । गोऽन्ते अन्तेऽवसाने गो गुरुः । एवं सामान्येन गणानुक्त्वा विशेषमाह—**जौ स्तः षष्ठद्वितीयकाविति** । षष्ठद्वितीयकौ गणौ जौ स्तः । मध्यगुरुजगणौ भवतः । अन्य आचार्या अर्धान्ते पादद्वयावसाने स्वरानाहुः, स्वराः प्रयोक्तव्या इति वदन्ति । **खण्डा स्यादिति** । अयमर्थः : उक्तेषु चतुर्षु पादेषु प्रथमं पादद्वयं नियतलक्षणम् , उत्तरपादद्वयमनियतलक्षणं कृतं चेत्खण्डा नाम द्विपदी भवेत् । **षष्ठेन गुरुणेति** । प्रतिपादं षष्ठगण-

ज्ञेया शुद्धैव संपूर्णा गुरुणान्तेऽधिकेन तु ॥ २१७ ॥
पुनश्चतुर्धा द्विपदी मानवी चन्द्रिका धृतिः ।
तारेति मानवी छेन तद्‌द्वयेन कृताङ्घ्रिका ॥ २१८ ॥
पद्वयं तगणश्चान्ते लगौ चेच्चन्द्रिका मता ।
छगणेन चतुर्मात्रैस्त्रिभिश्च धृतिरुच्यते ॥ २१९ ॥
तारा छेन चतुर्भिश्च यगणैरन्तिमे गुरौ ।

स्थाने एक एव गुरुः प्रयुज्यते चेन्मात्राद्विपदिकेति संमता । ज्ञेयेत्यादि । प्रतिपदमप्यधिकेन गुरुणा तु शुद्धैव संपूर्णा विज्ञेया । शुद्धायाः प्रतिपादान्तमेकैको गुरुरधिकः कर्तव्य इत्यर्थः । पुनश्चतुर्धेत्यादि । छेन षण्मात्रिकेण गणेन तद्‌द्वयेनान्त्यलघुयुक्तयोः पञ्चमात्रिकयोस्तगणयोर्द्वयेन; अत्र पूर्वोत्तरोक्तभगणयगणसाहचर्यात्तगण इति वर्णगण एव गृह्यते; न त्रिमात्रिको मात्रागणः; एतैः कृताङ्घ्रिका मानवी । पद्वयमिति । पञ्चमात्रिकयोः पगणयोर्द्वयम्, तगण इत्यत्रापि वर्णगणः । अन्ते लगौ चेदिति । प्रतिपदमित्यवगन्तव्यम् । तदा चन्द्रिका । चतुर्मात्रैरिति । भगणैर्जगणैर्वेत्यर्थः । तैस्त्रिभिरादौ छगणेन च कृताङ्घ्रिका धृतिरित्युच्यते । अन्तिमे गुरौ सति छगणेन चतुर्भिर्यगणैश्च कृताङ्घ्रिका तारा । एतासां पादचतुष्टययुक्तत्वेऽप्येकैकार्धस्य पादत्वविवक्षया द्विपदीव्यपदेशो द्रष्टव्यः । इत्यष्टौ द्विपद्यः । अत्र प्रथमार्धमुद्ग्राह उत्तरार्धं ध्रुवः पृथक्पदैराभोगो गातृनेतृप्रबन्धनामाङ्कितः कर्तव्यः । अतोऽयं त्रिधातुस्तालनियमान्नियुक्तः, पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् । मतान्तरेण स्वरेणापि बद्धत्वात्त्र्यङ्गो भावनीजातिमांश्च ॥ २१६—२१९ ॥ इति द्विपदीप्रबन्धः ॥

(सु०) द्विपदीं लक्षयति—शुद्धेति । कल्याख्येन तालेन या विरच्यते सा द्विपदी । सा चतुर्विधा—शुद्धा, खण्डा, मात्रा, संपूर्णेति । तत्र शुद्धां लक्षयति—

**पूर्वपूर्वाक्षरव्राते योऽन्त्यो वर्णचयः स चेत् ॥ २२० ॥**
**उत्तरोत्तरसंघादौ चक्रवालस्तदोच्यते ।**
**गद्यपद्यप्रभेदेन स द्विधा गदितो बुधैः ॥ २२१ ॥**

लक्षयति—पाद इति । पाद एकश्छगणः कर्तव्यः । पञ्च भाः भगणाः कर्तव्याः । अन्ते गो गुरुः, षष्ठद्वितीयकौ जगणौ स्तः, पूर्वं छगणः, ततो जगणः, ततः पञ्च भगणाः, पुनरपि जगणः, अन्ते गुरुः, एवं पादः कर्तव्यः; एवंविधैश्चतुर्भिः पादैः शुद्धा द्विपदी भवति । केषांचिन्मते तस्यामर्धान्ते स्वराः कर्तव्याः । एता लक्षयति—खण्डा स्यादिति । अर्धया शुद्धया द्विपद्या खण्डेत्युच्यते । पादद्वयेनैव विरच्यत इत्यर्थः । मात्राद्विपदीमाह—षष्ठेनेति । षष्ठस्य जगणस्य स्थान एक एव गुरुः क्षिप्यते चेन्मात्राद्विपदी । संपूर्णामाह—ज्ञेयेति । शुद्धैव द्विपदी अन्त एकेन गुरुणाधिकेन युक्ता संपूर्णेत्युच्यते । द्विपद्या अन्यान्भेदानाह—पुनरिति । पुनरपि द्विपदी चतुर्धा; मानवी, चन्द्रिका, धृतिः, तारेति । एतासां लक्षणमाह—मानवीति । छेन छगणेन तगणद्वयेन च चतुष्कलाश्च कृताश्चत्वारोऽङ्घ्रयो यस्याः सा तथाविधा मानवीत्युच्यते ; पगणद्वयमेको तगणः, अन्ते लगौ लघुगुरू, एको लघुः, एको गुरुश्चान्ते यदा क्रियते, एवंविधचरणचतुष्टयवती चन्द्रिका; छगण एकः, चतुर्मात्रागणास्त्रयः प्रतिचरणं चेत्तदा धृतिः ; एकश्छगणः, चत्वारो पगणा अन्ते गुरुः प्रतिचरणं चेत्तदा तारेति ॥ २१६—२१९- ॥ इति द्विपदीप्रबन्धः ॥

(क०) अथ चक्रवालं लक्षयति—**पूर्वपूर्वाक्षरव्राते**त्यादिना । पूर्वपूर्वेति वीप्सायां द्विर्वचनम् । अक्षरव्रातो वर्णचयोऽक्षरसमुदायो द्वौ वा त्रयो वा वर्णा इत्यर्थः । स वर्णचय उत्तरोत्तरसंघादावुत्तरोत्तरपदादौ भवति चेत्तदा चक्रवाल इत्युच्यते । अयं वर्णावृत्तिनियम उद्ग्राहध्रुवयोरवश्यं कर्तव्यः । आभोगे त्वनियम इति संप्रदायो वेदितव्यः । तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः ; पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ -२२०,२२१ ॥ इति चक्रवालप्रबन्धः ॥

**पदैः स्वरैः क्रौञ्चपदः प्रतितालेन गीयते ।**
**स्वरन्यासः स तन्नाम्ना छन्दसा मुक्तकोऽथ वा ॥ २२२ ॥**

(सु०) चक्रवालं लक्षयति—पूर्वेति । पूर्वेषामक्षराणां प्रान्ते यो वर्णसमूहः स उत्तरोत्तरस्य संवस्याक्षरसमूहस्याद्यो भवति चेत्तदा चक्रवालः । स द्विविधः, गद्यजः, पद्यजश्चेति ॥ २२०—२२१ ॥ इति चक्रवालप्रबन्धः ॥

(क०) अथ क्रौञ्चपदं लक्षयति—**पदैः स्वरै**रित्यादि । **प्रतितालेनेति** । '**लद्रुतौ प्रतितालः स्यात्**' इति लक्षणं वक्ष्यते । अत्र स्वरैरुद्ग्राहः कर्तव्यः; पदैर्ध्रुवः । स्वरन्यास उद्ग्राहमारभ्य न्यसनीय इत्यर्थः । **स तन्नाम्ना छन्दसेति** । स क्रौञ्चपदः, तन्नाम्ना क्रौञ्चपदाभिधानेन । अथ वा मुक्तश्छन्दोहीन इत्यर्थः । क्रौञ्चपदलक्षणं त्वतिकृतौ छन्दसि ;

'क्रौञ्चपदा भ्मौ स्मौ नौ नौ ग्भूतेन्द्रियवस्वृषयः' इति ॥

अस्यार्थः—यस्य पादे भकारमकारौ सकारभकारौ नकाराश्चत्वारो गकारश्च भवति तत्क्रौञ्चपदा नाम, पञ्चसु पञ्चस्वष्टसु सप्तसु च यतिरिति । तत्रोदाहरणम्—

'या कपिलाक्षी पिङ्गलकेशी कलिरुचिरनुदिनमनुनयकठिना ।
दीर्घतराभिः स्थूलशिराभिः परिवृतवपुरतिशयकुटिलगतिः ॥
आयतजङ्घा निम्नकपोला लघुतरकुचयुगपरिचितहृदया ।
सा परिहार्या क्रौञ्चपदा स्त्री ध्रुवमिह निरवधिसुखमभिलषता ॥' इति॥

अत्रापि पूर्ववदाभोगः पदैः कर्तव्यः । तेनायं त्रिधातुस्तालादिनियमान्निर्युक्तः, स्वरपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥२२२॥ इति क्रौञ्चपदप्रबन्धः ॥

(सु०) क्रौञ्चपदं लक्षयति—पदैरिति । क्रौञ्चपदनाम्ना छन्दसा विरचितः, छन्दोहीनश्च ॥ २२२ ॥ इति क्रौञ्चपदप्रबन्धः ॥

**यत्र स्वराक्षरैरेव वाञ्छितोऽर्थोऽभिधीयते ।**
**स स्वरार्थो द्विधा शुद्धो मिश्रस्तैः शुद्धमिश्रितैः ॥ २२३ ॥**
**ग्रहन्यासोऽस्य भूयोऽसौ सप्तधैकादिकैः स्वरैः ।**
**क्रमोत्क्रमाभ्यां बहुशो भिद्यन्ते द्विस्वरादयः ॥ २२४ ॥**

(क०) अथ स्वरार्थं लक्षयति—**यत्र स्वराक्षरैरेवेति** । स्वराक्षरैरेव षड्जादिस्वरवाचकैः सरिगमपधनिभिरेव वाचकपदत्वमापन्नैर्वाञ्छितोऽर्थो वाग्गेयकारस्याभीष्टोऽर्थोऽभिधीयत उच्यते चेत्स स्वरार्थो नाम प्रबन्धः । **शुद्धमिश्रितैरिति** । शुद्धाश्च मिश्रिताश्चेति द्वंद्वः । अत्र केवलं स्वरा एव शुद्धा वा विकृता वा शुद्धत्वेन विवक्षिताः । अक्षरान्तरसहितास्तु मिश्रिताः । **ग्रहन्यास** इति । ग्रहे न्यास इत्यर्थः । **अस्येति** । स्वरार्थस्य । **भूयोऽसौ सप्तधैकादिकैः स्वरैरिति** । असौ शुद्धो मिश्रोऽपि स्वरार्थ एकादिकैः स्वरैर्भूयः सप्तधेति । अयमर्थः—एकस्वर एकार्थवाचकपदम्, द्वौ स्वरावेकार्थवाचकं पदम्, त्रयः स्वरा एकार्थवाचकं पदमित्येवमादयः सप्त शुद्धभेदा द्रष्टव्याः । एवमेकस्वरयुक्तं द्विस्वरयुक्तं त्रिस्वरयुक्तं पदमित्यादिना मिश्रोऽपि सप्तधा द्रष्टव्य इति । भूय इत्यनेन प्रत्येकमित्यवगन्तव्यम् । **क्रमोत्क्रमाभ्यामित्यादि** । **द्विस्वरादय** इति । शुद्धैः षण्मिश्रैश्च षण्मिलित्वा द्वादश भेदाः क्रमोत्क्रमाभ्यां सरिगादिना क्रमेण रिसगादिना व्युत्क्रमेण च बहुशो भिद्यन्ते; संख्यातुमशक्या इत्यर्थः । अत्र शुद्धमिश्राश्रितयोरेकस्वरयोः क्रमाद्यसंभवाद्द्विस्वरादय एवोक्ता इत्यवगन्तव्यम् । एवं नियमेनोद्ग्राहध्रुवौ गातव्यौ । आभोगस्त्वन्यपदैः पूर्ववद्गातव्यः । तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः; पदतालबद्धत्वद्वचङ्गस्तारावलीजातिमान् । अत्र सरिगादिस्वरप्रयोगेऽपि तेषां वाचकपदत्वेनोपस्थापितत्वादन्यत्र स्वरबद्धत्वं नाशङ्कनीयम् ॥ २२३, २२४ ॥ इति स्वरार्थप्रबन्धः ॥

**ध्रुवोद्ग्राहौ भिन्नतालौ मण्ठकङ्कालवर्जितौ ।**
**यस्यां समासु मात्रासु यतिर्मेलापको न च ॥ २२५ ॥**
**तालद्वयेन सा गेया ढेङ्कीवद्ध्वनिकुट्टनी ।**

(सु०) अथ स्वरार्थं लक्षयति—यत्रेति । यत्र सरिगमादिस्वराक्षरैरेव स्वाभिलषितार्थो निबद्ध्यते स स्वरार्थः । स द्विविधः; ग्रहे न्यासे च, तैः शुद्धैः स्वरैर्निबद्धो शुद्धः; मिश्रितैः स्वरैर्निबद्धो मिश्र इति । पुनरपि सप्तविधः; एकस्वरः, द्विस्वरः, त्रिस्वरः, चतुःस्वरः, पञ्चस्वरः, षट्स्वरः, सप्तस्वरश्चेति । द्विस्वरादीनां क्रमव्यत्यासभेदेन बहवो भेदा भवन्ति । ते लक्ष्येऽप्रसिद्धत्वाद्विशेषतो नोक्ता इत्यर्थः ॥ २२३, २२४ ॥ इति स्वरार्थप्रबन्धः ॥

(क०) अथ ध्वनिकुट्टनीं लक्षयति—**ध्रुवोद्ग्राहावित्यादि । भिन्नतालाविति** । उद्ग्राहे प्रयुक्तस्तालो ध्रुवे न प्रयोक्तव्य इत्यर्थः । **मण्ठकङ्कालवर्जिताविति** । मण्ठकङ्कालव्यतिरिक्ततालान्तरयुक्तौ भवत इति नियमः क्रियते । समासु समसंख्यासु मात्रासु यतिः पदविरतिः कर्तव्या । **मेलापको न चेति** । अनन्तरं ढेङ्कीवदित्यतिदेशः करिष्यते । तत्रापि वैकल्पिको मेलापकः प्राप्नोतीति नित्यतया तन्निषेधः क्रियते । सा ध्वनिकुट्टनी । **ढेङ्कीवत्तालद्वयेन गेयेति** । यथा ढेङ्की मिथो लयान्तरयुक्तेन तालद्वयेन गीयते, तथेयमपि मिथो भिन्नलयेन तालद्वयेन गातव्येत्यतिदेशार्थः । मेलापकनिषेधादयं त्रिधातुः, तालनियमान्नियुक्तः, पदतालबद्धत्वाद्द्वचङ्गस्तारावलीजातिमान् ॥ २२५- ॥ इति ध्वनिकुट्टनीप्रबन्धः ॥

(सु०) ध्वनिकुट्टनीं लक्षयति—ध्रुवोद्ग्राहाविति । ध्रुव उद्ग्राहश्च भिन्नतालौ कर्तव्यौ । ध्रुवेऽन्यस्तालः, उद्ग्राहेऽन्यस्तालः, मण्ठकङ्कालौ न कार्यौ । समासु मात्रासु यतिर्यतितालः कर्तव्यः । प्रयोगात्मको मेलापकः, नास्ति अन्यत्सर्वं लक्षणं ढेङ्कीवद्यस्याः सा ध्वनिकुट्टनीति ॥ २२५- ॥ इति ध्वनिकुट्टनीप्रबन्धः ॥

अर्धान्ते चरणान्ते वा स्वरान्न्यस्यार्धमादिमम् ॥ २२६ ॥
द्विरार्याच्छन्दसो गीतं सकृद्गीतं दलान्तरम् ।
यत्राभोगे गातृनाम सार्या स्यादुद्ग्रहमुक्तिका ॥ २२७ ॥
लक्ष्मीः स्याद्वृद्धिबुद्धी च लीला लज्जा क्षमा तथा ।
दीर्घा गौरी ततो राजी ज्योत्स्ना छाया च कान्तिका ॥२२८॥
मही मतिस्ततः कीर्तिरथ ज्ञेया मनोरमा ।
स्याद्रोहिणी विशाला च वसुधा शिवया सह ॥ २२९ ॥

(क०) अथार्यां लक्षयति—**अर्धान्त** इति । आर्याप्रबन्धे चरणान्ते च स्वरान्सरिगादीन्न्यस्येत् । तत्रार्धचरणशब्दयोः साकाङ्क्षत्वादनन्तरवाक्यगताया आर्याच्छन्दस इति षष्ठ्याः संबन्धोऽवगम्यते । आर्याच्छन्दस आदिममर्धं द्विर्गीतं भवेत् । दलान्तरं द्वितीयमर्धं सकृद्गीतं भवेत् । अत्र-प्रथमार्धमुद्ग्राहो द्वितीयार्धं ध्रुव इत्यवगन्तव्यम् । **आभोगो गातृनाम भवे-दिति** । गातृनामेति नेतृप्रबन्धनाम्नोरप्युपलक्षणम् । तेनाभोगो गातृनेतृ-प्रबन्धनामाङ्कितः कर्तव्य इत्यर्थः । उद्ग्रहमुक्तिका उद्ग्राहन्यासवती सार्या स्यादिति सामान्यलक्षणम् । तद्भेदानुद्दिशति—**लक्ष्मीः स्यादित्यादि** । तेषां लक्षणानि संक्षिप्याह—**षष्ठादन्यैरित्यादि** । अत्र तावदार्याच्छन्दसि प्रथमेऽर्धे 'लक्ष्मैतत्सप्त गणाः' इत्यादिलक्षणवशाद्गणाः सप्तान्ते गुरुश्च कर्तव्यो भवति । अत्र गणास्तु—

'ज्ञेयाः सर्वादिमध्यान्तगुरवोऽत्र चतुष्कलाः ।
गणाः सप्त लघूपेताः पञ्च आर्यादिसंस्थिताः ॥'

इति वचनाच्चतुर्मात्रिका भवन्ति । तत्र प्रथमादिगणानामनियमेऽपि 'षष्ठो ऽयं नलघु वा' इति वचनात्षष्ठो गणोऽयमिति प्रकृतत्वाज्जगणः परा-

हरिणी चाथ चक्राख्या सारसी कुररी तथा ।
हंसी वधूरिति प्रोक्ता आर्याः षड्विंशतिः क्रमात् ॥ २३० ॥
षष्ठादन्यैर्गणैः सर्वगुरुभिः प्रथमा पराः ।
एकादिगुरुभङ्गेण क्रमाल्लक्ष्माण्यमूनि तु २३१ ॥

मृश्यते ; जगणो भवतीत्यर्थः । वा पक्षान्तरे नलघु नगणश्च लघुश्च तौ भवतः । चत्वारः पृथग्लघवो भवन्तीत्यर्थः । एवं प्रथमार्धे षष्ठस्यैव गणस्य नियमो नान्येषाम् । तथा द्वितीयेऽपि ; 'चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः' इति वचनात्षष्ठो ल एक एव लघुर्भवतीति षष्ठस्यैव नियमो नान्येषाम् । तस्मादार्याया विशेषलक्षणं प्राधान्येन षष्ठगणगतं द्रष्टव्यम् । मात्रार्धद्वये षष्ठगणस्य विकारपरिहारेणेतरगणविकारा एव भेदानां लक्षणान्युक्तानीति मन्तव्यम् । **षष्ठादन्यैरिति** । प्रत्येकं गोपितसप्तगणात्मनोः पूर्वोत्तरार्धयोः षष्ठाद्गणादन्यैर्गणैर्द्वादशसंख्याकैः । **सर्वगुरुभिरिति** । एकैकस्य गणस्य गुरुद्वयसंख्यया चतुर्विंशतिर्गुरवो भवन्ति । अधिकगुरुभ्यां सह षड्विंशतिर्भवन्ति । एवं सर्वगुरुभिर्गणैः प्रथमा लक्ष्मीसंज्ञा भवन्ति ; परा वृद्ध्यादयः पञ्चविंशतिः क्रमादेकादिगुरुभङ्गेण भवन्तीत्यध्याहार्यम् । **एकादिगुरुभङ्गेणेति** । एकद्वित्रिचतुरादिपञ्चविंशतिगुरुपर्यन्तं भङ्गेनेत्यर्थः । गुरोर्भङ्गो नाम लघुद्वयकरणम् । अत्रैकादिगुरुभङ्गेणेत्येतावत्युच्यमाने यत्र कुत्रापि स्थितस्यैकस्य तादृशयोर्द्वयोस्तादृशानां त्रयाणामेवं चतुरादीनामप्यनियतानां गुरूणां भङ्गे वृद्ध्यादिलक्षणत्वं प्राप्नोति, तन्मा भूदिति क्रमादित्युक्तम् । तेनात्रैकशब्दः संख्यावाच्येव प्रथमे नियम्यते । ततश्चादिशब्दोऽपि द्वितीयादिष्वेव नियम्यते । तथा च सत्येकस्य भङ्गे वृद्धिः, द्वयोर्भङ्गे बुद्धिः, त्रयाणां भङ्गे लीला, चतुर्णां भङ्गे लज्जा, एवं पञ्चगुरुभङ्गप्रभृत्यापञ्चविंशतिगुरुभङ्गेण क्षमादयः क्रमेण योजनीयाः । एवं पञ्चविंशतिगुरुभङ्गत एवोद्दिष्टभेदपरिसमाप्तेरन्तिमस्य षड्विंशस्य गुरोर्भङ्गो नास्त्येवेत्यवगम्यते । **लक्ष्माण्यमूनि**

**छन्दोलक्षणतो ज्ञेयाः शेषा भूरितरा भिदाः ।**

त्विति । अत्र तु शब्दो ऽवधारणार्थे, अमून्येवेति, षष्ठगणव्यतिरिक्तसर्वगुरुमारभ्यैकादिगुरुभङ्गान्तान्येव लक्षणानि लक्ष्मीवृद्ध्याद्यार्याभेदानां लक्षणानीतो व्यतिरिक्तानि लक्षणान्तराणि न सन्तीत्येवकारार्थः । अमूनीति प्रतिनिर्दिश्यमानलक्ष्मपदलिङ्गापेक्षया नपुंसको निर्देशः । **छन्दोलक्षणत** इत्यादि । **शेषा भूरितरा भिदा** इति । आर्यायाः पथ्याविपुलादयो बहवो भेदाश्छन्दोलक्षणतः—

'त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन ॥'

इत्यादिकाश्छन्दःशास्त्रादेव ज्ञेयाः । आर्यासामान्यस्वरूमपि तत एव ज्ञेयमिति भावः । मेलापकस्यानुक्तत्वादयं त्रिधातुश्छन्दोनियमान्नियुक्तः, स्वरपाटतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ -२२६-२३१- ॥ इत्यार्याप्रबन्धः ॥

(सु०) आर्यां लक्षयति—अर्धान्त इति । अर्धान्ते प्रथमदलान्ते चरणान्ते पादान्ते वा स्वरान्यस्य, आदिमं दलं द्विर्गेयम् । दलान्तरं द्वितीयदलमन्यगीतिसदृशधातुकमर्धतः सकृद्गीयते सार्धगीतिरिति लभ्यते । आभोगे गातुर्वाग्गेयकारस्य नाम सार्या । ग्रह उद्ग्राहे समाप्तिर्यस्याः सा ग्रहमुक्तिका । तस्या भेदानाह—लक्ष्मीरिति । लक्ष्म्यादयो वृद्धयन्ताः षड्विंशतिर्भेदा भवन्ति । तेषां लक्षणमाह—षष्ठादिति । षष्ठे गण आर्यासु सर्वगुरुत्वासंभवात् षष्ठादन्यैर्गणैः सर्वगुरुभिः प्रथमा लक्ष्मीः स्यात् । परास्तु वृद्ध्यादयः क्रमश एकैकगुरुभङ्गेण लघुद्वयवृद्ध्या ज्ञातव्याः । यदाह पिङ्गलनागः—'गुरु टुट्टइ बे ळहु चळइ तं तं णाम विआरि' इति । एकगुरुभङ्गेण वृद्धिः, गुरुद्वयभङ्गेण बुद्धिः, गुरुत्रयभङ्गेण लीलेत्यादि; एवमेव पञ्चविंशतिगुरुभङ्गेण वधूरित्यन्तं ज्ञेयम् । अन्ये भेदाश्छन्दोलक्षणतश्छन्दःशास्त्रतो ज्ञातव्याः । आर्यासामान्यलक्षणमुक्तं वृत्तरत्नाकरे—

'लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठो ऽयं नलघू वा प्रथमे ऽर्धे नियतमार्यायाः ॥

**आर्यैव प्राकृते गेया स्यात्पञ्चचरणाथ वा ॥ २३२ ॥**
**त्रिपदी षट्पदी गाथेत्यपरे सूरयो जगुः ।**
**छन्दसा द्विपथेन स्याद्द्विपथः स्वरमुक्तिकः ॥ २३३ ॥**

षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥'

इति ॥ -२२६—२३१- ॥ इत्यार्याप्रबन्धः ॥

(क०) अथ गाथां लक्षयति—**आर्येत्यादि** । उक्तलक्षणार्यैव प्राकृते प्राकृतपदं विषयीकृत्य गीयते चेत्तदा गाथा स्यादिति । अनेनार्यायाः संस्कृतपदविषयत्वमुक्तं भवति । पदव्यतिरिक्तमन्यदार्यागतं लक्षणमनुसंधेयम् । केषांचिन्मतेन पदभेदाभावादार्यैव चरणन्यूनाधिकभावेन गाथा भवतीति लक्षणान्तराणि दर्शयति—**पञ्चचरणाथ वेत्यादिना** ॥ -२३२- ॥ इति गाथाप्रबन्धः ॥

(सु०) गाथां लक्षयति—**आर्यावदिति** । सैव प्राकृतलक्षणवत्यार्या गाथेत्युच्यते । अथ वा पञ्च चगणवतीमात्रया सा कार्या । मतान्तरेण तस्या द्वैविध्यमाह—**त्रिपदीति** । पादत्रयवती, पादषट्कवती च गाथेति केचन वदन्ति ॥ -२३२ ॥ इति गाथाप्रबन्धः ॥

(क०) अथ द्विपथकं लक्षयति—**छन्दसेत्यादि** । **द्विपथेनेति** । द्विपथं दोधकमिति पर्यायशब्दौ । तेन दोधकलक्षणमेव द्विपथलक्षणं वेदितव्यम् । दोधकलक्षणं तु; 'दोधकं भौ भगौ गिति'; अस्यार्थः—यस्य पादे भकारौ भकारगकारौ गकारश्च तद्दोधकं नामेति । अत्रोदाहरणम् —

'दोधकमर्थनिरोधनमुग्रं क्लीबमपलं युधि कातरचित्तम् ।
स्वार्थपरं मतिहीनममात्यं मुञ्चति यो नृपतिः स सुखी स्यात्' ॥इति ॥

तालहीनः सतालो वा स च ज्ञेयश्चतुर्विधः।
स्वरैरेको ऽन्यः प्रयोगैः सोभयानुभयौ परौ ॥ २३४ ॥
प्राकृते दोहसंज्ञोऽसौ तस्य भेदा नव त्विमे।
सारसो भ्रमरो हंसः कुररश्चन्द्रलेखकः ॥ २३५ ॥
कुञ्जरस्तिलको हंसक्रीडोऽप्यथ मयूरकः।
त्रयोदशायुजि समे मात्रा द्वादश सारसे ॥ २३६ ॥

अत्र पादान्ते यतिः। द्विपथकस्य दोधकपर्यायत्वं प्राकृते, 'दोहसंज्ञोऽसौ' इत्यनन्तरं वक्ष्यमाणस्य तद्भेदस्य दोहशब्दस्य छायाशब्दत्वेन दोधकशब्दप्रतीतिरवगम्यते। तेन दोधकेन छन्दसेत्यर्थः। स्वरमुक्तिकः स्वरन्यासवान्। पक्षे तालहीनः। पक्षान्तरे सतालः। अनियतैकतालसहितः। स च द्विपथप्रबन्धश्चतुर्विधो ज्ञेयः; वक्ष्यमाणप्रकारैरित्यर्थः। तदेव दर्शयति—**स्वरैरित्यादि**। एकः प्रथम उद्ग्राहध्रुवयोः स्वरैर्बद्धः स्यादित्यर्थः। अन्यो द्वितीयः पूर्ववत्प्रयोगैर्बद्धः स्यात्। परौ तृतीयचतुर्थौ सोभयानुभयौ, तृतीयः सोभयः, उभयैः स्वरैः प्रयोगैश्च सहितः, तृतीये स्वरैरुद्ग्राहः, प्रयोगैर्ध्रुवः कर्तव्य इत्यर्थः। चतुर्थो ऽनुभयः, स्वरप्रयोगाभ्यां रहितः, चतुर्थे पदैरेवोद्ग्राहध्रुवौ कर्तव्यावित्यर्थः। एतेषु पदैराभोगः कर्तव्य इत्यर्थः। **प्राकृत** इत्यादि। असौ द्विपथकः प्राकृतपदविषयश्चेत्तदा दोहसंज्ञो भवति। संस्कृते द्विपथसंज्ञो दोधकसंज्ञो वेत्यर्थः। नन्वत्र स्वरमुक्तिक इत्युक्तम्, चतुर्णां मध्ये द्वयोरेव स्वरा उक्तास्तत्रोपपद्यते। द्वयोस्तु नोक्तास्तत्र कथमिति चेत्, सत्यम्; तत्र भेदद्वये ऽप्युद्ग्राहस्य स्वरबद्धत्वाद्भेदान्तरे स्वराभावे ऽपि स्वरशब्देन तत्रोद्ग्राह उपलक्ष्यते। तेनोद्ग्राहे न्यासः स्यादित्यभिप्रायाददोषः। **तस्य भेदा** इत्यादि। तस्य द्विपथस्येमे तु वक्ष्यमाणाः सारसादयस्तु नव भेदा भवन्ति। सारसादीनां लक्षणमाह—**त्रयोदशेत्यादिना**। सारसेऽयुजि विषमपादे त्रयोदश मात्राः। छन्दोगत-

ओजेऽङ्घ्रौ मनवो मात्रा भ्रमरे रवयः समे ।
मात्राः पञ्चदशायुग्मे हंसे युग्मे त्रयोदश ॥ २३७ ॥
त्रयोदशायुजि कलाः कुञ्जरे तिथयः समे ।
मात्राः पञ्चदशायुग्मे तिलके मनवः समे ॥ २३८ ॥
त्रयोदशासमे हंसक्रीडे युग्मे कलाः कलाः ।
यद्येषामर्धयोरन्ते पञ्चादिलघुभिः शिखा ॥ २३९ ॥
तं शिखाद्विपथं प्राहुर्मयूरमपि सूरयः ।
एतेषु व्यत्ययेनापि चरणानां स्थितिर्भवेत् ॥ २४० ॥
भवन्त्येकादिपादानां सकृद्द्विर्गानभेदतः ।
द्विपथा भूरिभेदास्ते लक्ष्या लक्ष्येषु सूरिभिः ॥ २४१ ॥

त्वादेव मात्राशब्देन लघ्वक्षरमुच्यते । तालगतत्वे तु पञ्चलघ्वक्षरोच्चारमितकालो द्रष्टव्यः । समे पादे द्वादश मात्रा भवन्ति । भ्रमरादीनां लक्षणानि ग्रन्थत एव सुबोधानि । तत्र मनव इत्यादीनां शब्दानां चतुर्दशादिसंख्यापरत्वं तु प्रसिद्धमेव । एते सारसादयो नव भेदाः प्रथमोक्तेषु चतुर्षु भेदेषु प्रत्येकं योजनीयाः । **यद्येषामित्यादि** । एषां भेदानामर्धयोरन्ते वा मध्ये मध्येऽपि वा पदान्ते वेत्यर्थः । पञ्चादिलघुभिः । आदिशब्देन षट्सप्तादयो गृह्यन्ते । यथा पादमितिर्मात्राधिकं न भवति तथा शिखा कर्तव्येति भावः । **एतेष्वित्यादि** । एतेषु शिखाद्विपथेषु चरणानां पादानाम् । **व्यत्ययेनापीति** । विषमपादोक्तमात्रासंख्या समपादे भवेत् । समपादोक्तमात्रासंख्या विषमपादे भवेदित्यर्थः । **भवन्तीत्यादि** । **एकादिपादानां सकृद्द्विर्गानभेदत** इति । एकपादस्य प्रथमपादस्येत्यर्थः । तस्य सकृद्गानमितरेषां द्विर्गानं प्रथमस्य द्विर्गानमितरेषां सकृद्गानम् । एवं प्रथमद्वितीययोः सकृद्गानं द्विर्गानं च पूर्ववद्द्रष्टव्यम् । तथा त्रयाणां चतुर्णामपि । एवं गानभेदतो द्विपथा

भूरिभेदा भवन्तीत्यन्वयः। एते भेदा लक्ष्येषु लक्ष्याः; नामोद्देशादिना लक्ष्यन्त इत्यर्थः। अयं मेलापकाभावात्त्रिधातुः च्छन्दोमात्रिर्युक्तः, कचित्स्वरपद-तालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान्। अत्र प्रबन्धस्यैकाङ्गतापत्तेः सप्रयोगा-नुभयौ तालहीनौ कर्तव्यौ। तेन तालहीनः सतालो वेति विकल्पो भागव्यवस्था द्रष्टव्यः। यथा सप्रयोगानुभयौ सतालावेव सस्वरसोभयौ तालहीनौ सतालौ वेति सर्वं समञ्जसम् ॥ -२२३-२४१ ॥ इति द्विपथप्रबन्धः ॥

द्विपथकं लक्षयति—छन्दसेति। द्विपथकनाम्ना छन्दसा निबद्धो द्विपथः। स्वरेषु मुक्तिः समाप्तिर्यस्य स स्वरमुक्तिकः, स तालहीनः, सतालो वा कर्तव्यः। स चतुर्विधः; एकः स्वरैरेवोपनिबद्ध्यते, अपरः प्रयोगैर्गमकैर्निबद्ध्यते, कश्चनो-भाभ्यां स्वरगमकाभ्यां निबद्ध्यते, कश्चनानुभय उभाभ्यां हीनः। तस्य भाषा-विशेषेण नामान्तरभेदांश्चाह—प्राकृत इति। असौ द्विपथकः प्राकृते दोहा इत्युच्यते। तस्य सारसादयो नव भेदा भवन्ति। तेषां लक्षणमभिधत्ते—त्रयोदशेति। अयुजि प्रथमे तृतीये च चरणे त्रयोदश मात्रा भवन्ति, समे द्वितीये चतुर्थे चरणे द्वादश मात्रा भवन्ति; तदा सारसः। ओजे विषमचरणद्वये मनवश्चतुर्दश मात्राः; समे चरणद्वये रवयो द्वादश मात्रास्तदा भ्रमरः। विषमे पञ्चदश मात्राः, समे त्रयोदश मात्रास्तदा हंसः। विषमे त्रयोदशकलाः, समे चतुर्दश मात्रास्तदा कुररः। विषमे तिथयः पञ्चदश कलाः, समे रवयो द्वादश मात्रास्तदा चन्द्रलेखः। विषमे त्रयोदश मात्राः, समे पञ्चदश कलास्तदा कुञ्जरः। विषमे पञ्चदश मात्राः, समे चतुर्दश मात्रास्तदा तिलकः। विषमे त्रयोदश कलाः, समे षोडश कलास्तदा हंसक्रीडा। येषां पूर्वोक्तानां दोहानां मध्ये पञ्च-लघुनिर्मिता षड्डादिलघुनिर्मिता वा शिखा क्रियते तदा तं दोहं सूरयो ज्ञातारः केचिच्छिखाद्विपथमित्याहुः, केचिन्मयूरमित्यपि वदन्ति। एतेष्विति। एतेषु पूर्वोक्तेषु दोहेषु व्यत्ययेनापि चरणानां स्थितिः; समचरणलक्षणं विषमचरणयोः, विषमचरणलक्षणं समचरणयोः। एतेषां द्विपथकानामेकद्वित्रिचतुष्पदानां सकृ-द्गानं, द्विवारं वा गानमित्यादिभेदेन बहवो भेदा भवन्ति। ते लक्ष्ये लक्ष-णीयाः ॥ -२२३—२४१ ॥ इति द्विपथप्रबन्धः ॥

**छन्दसः कलहंसस्य पादैरन्ते स्वरान्वितैः ।**
**कलहंसः स्वरे न्यासो गेयो झम्पादितालतः ॥ २४२ ॥**
**वर्णजो मात्रिकश्चेति कलहंसो द्विधा मतः ।**
**गद्यात्मा चेत्स्वरान्गीत्वा ततः पदनिवेशनम् ॥ २४३ ॥**

(क०) अथ कलहंसं लक्षयति—**छन्दसः कलहंसस्येत्यादि** । कलहंसस्य छन्दसो लक्षणं भारतीये जगत्यां नर्कुटभेदेषु मुनिनोक्तम्, यथा—

'द्वितीयसप्तमान्त्यं चतुर्थं यदा गुरुर्यदा च षष्ठो दशमोऽपि वा ।
अथोदिता हि पादे त्वथ जागते भवेदिदं तु हंसाख्यमिति स्मृतम् ॥'

इदमेवोदाहरणं च । अस्यार्थः—जागते पादे द्वादशाक्षरात्मके चरणे द्वितीयचतुर्थषष्ठसप्तमदशमद्वादशाक्षराणि यदा गुरवो भवन्ति तदा हंसाख्यं नाम छन्दः । हंसाख्यमेव कलहंसम्; तेन बद्धः प्रबन्धः कलहंस उच्यते । **अन्ते स्वरान्वितैः पादैरिति** । प्रतिपादान्तं स्वरान्प्रयुञ्ज्यादित्यर्थः । **स्वरे न्यास इति** । प्रथमपादयुक्तेषु स्वरेषु प्रथमस्वरान्कतिचिदारभ्य न्यासं कुर्यादित्यर्थः । **झम्पादितालतो गेय** इति । 'झम्पातालौ विरामान्तं द्रुतद्वंद्वं लघुस्तथा' इति झम्पातालस्य लक्षणं वक्ष्यते । आदिशब्देन तन्मात्रासंमितदेशीतालान्तरं गृह्यन्ते । **वर्णजो मात्रिकश्चेति** । वर्णजः पद्यरूपः; मात्रिको गद्यरूपः । वर्णजस्योक्तलक्षणानुसारेण नियतगणबद्धत्वात्पद्यरूपत्वम् । मात्रिकस्यानियतगणबद्धत्वाद्गद्यरूपत्वम् । मात्रासंख्यातूभयोः समानैव; अन्यथा कलहंसप्रकृतिकत्वाभावप्रसङ्गात् । **गद्यात्मा चेति** । मात्रिकश्चेदित्यर्थः । **स्वरान्गीत्वा ततः पदनिवेशनमिति** । प्रतिपादमादौ स्वराः प्रयोक्तव्या इत्यर्थः । अत्र प्रथमार्धमुद्ग्राहः; उत्तरार्धं ध्रुवः; पूर्ववदाभोगः पृथक्कर्तव्यः; तेनायं त्रिधातुः; छन्दस्तालनियमान्नियुक्तः; स्वरपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २४२, २४३ ॥ इति कलहंसप्रबन्धः ॥

**तोटकच्छन्दसा न्यस्तस्वरोऽङ्घ्र्यन्ते तु तोटकः ।**
**ननु वृत्ते वक्ष्यमाणे पुनरुक्तोऽत्र तोटकः ॥ २४४ ॥**

(सु०) कलहंसं लक्षयति—छन्दस इति । कलहंसाख्यस्य छन्दसोऽन्ते स्वराश्रिताः पाटादि क्षिप्यन्ते तदा कलहंसः । स्वरेषु न्यासः समाप्तिर्यस्य ; स झम्पादिभिस्तालैर्गेयः । स द्विविधः ; वर्णजो मात्रिकश्चेति । वर्णगणैर्निर्मितो वर्णजः, मात्रागणैर्निर्मितो मात्रिकः । यदा गद्येन विरच्यते तदा पूर्वं स्वरान्गीत्वा पश्चात्पदं निवेशनीयम् ॥ २४२, २४३ ॥ इति कलहंसप्रबन्धः ॥

(क०) अथ तोटकं लक्षयति—**तोटकच्छन्दसे**त्यादि । तोटकच्छन्दसो लक्षणं तु, 'तोटकं सः' इति । अस्यार्थः—जगत्यधिकारे प्रस्तुते यावद्भिः सकारैर्जगतीपादः पूर्यते तावन्त एव सकारा यत्र पादे भवन्ति तत्तोटकं नाम वृत्तमिति । द्वादशाक्षरात्मकस्य जगतीपादस्य चतुर्भिः सगणैः पूरितत्वाच्चत्वारः सगणास्तोटकमित्यर्थः । सूत्रे जातिविवक्षयैकवचनं द्रष्टव्यम् । तत्रोदाहरणम्—

'त्यज तोटकमर्थवियोगकरं प्रमदाधिकृतं व्यसनोपहतम् ।
उपधाभिरशुद्धमतिं सचिवं नरनायक ! भीरुकमायुधिकम् ॥' इति ॥

अत्र पादान्ते यतिः । तोटकच्छन्दसेतीत्थंभूतलक्षणे तृतीया । तेन बद्धः प्रबन्धोऽपि तोटक इत्युच्यते । **अङ्घ्र्यन्ते न्यस्तस्वरस्त्व**िति । अत्र तुशब्दो यद्यर्थे । तोटकं छन्द एव प्रतिपादान्तं न्यस्तस्वरं चेत्तोटकप्रबन्ध इत्यर्थः । वक्ष्यमाणेन वृत्ताख्यप्रबन्धेनास्य पौनरुक्त्यमाशङ्क्य चोदयति— **नन्वि**ति । वृत्ते वृत्ताख्यप्रबन्धे वक्ष्यमाणे सत्यत्र तोटकः पुनरुक्तो भवतीति । अयमभिसंधिः—वक्ष्यमाणे वृत्ताख्यप्रबन्धलक्षणे छन्दसा येन केनापीति सामान्येन वृत्तमात्रोपादानात्तदन्तर्भूतत्वेन तोटकस्यापि तत्र प्राप्तेरत्र पृथग्वचनं पुनरुक्तमेवेति । किंचात्र तोटक इत्युपलक्षणम् । तेन कन्दतुरगलीलाक्रौञ्चपदाया

**सत्यं किंतु मते तेषां वृत्तं वृत्ताख्यवृत्ततः ।**
**तन्मते तोटकस्येह नैवास्ति पुनरुक्तता ॥ २४५ ॥**

गाथाद्विपथकलहंसानां छन्दोरूपाणां वृत्तेऽन्तर्भावात्तेषामपि पुनरुक्ततेति चोद्यार्थः । अर्धाङ्गीकारेण परिहरति—**सत्यमिति** । अनङ्गीकारे विशेषं दर्शयति—**किं त्विति** । येषां मते वृत्ताख्यवृत्ततो वृत्तं भवेत् । वृत्ताख्य-वृत्तस्य लक्षणं तु—'ग्लिति वृत्तम्' इति । अस्यार्थः—कृतौ छन्दसि विंशत्यक्षरात्मके यस्य पादे गकारलकाराः क्रमेण विंशतिर्भवन्ति तद्वृत्तं वृत्तं नामेति । तत्रोदाहरणम्—

'गात्रदुःखकारि कर्म निर्मितं भवत्यनर्थहेतुरत्र
तेन सर्वमात्मतुल्यमीक्ष्यमाणमुत्तमं सुखं भजस्व ।
विद्धि बुद्धिपूर्वकं ममोपदेशवाक्यमेतदादरेण
साधुवृत्तमुत्तमं महाकुलप्रसूतमेति नो हि जन्म ॥' इति ॥

पादान्ते यतिः । येषामाचार्याणां मत एवंविधेन वृत्ताख्यवृत्तेन वृत्तप्रबन्धो भवति; तन्मत इह प्रबन्धविषये तोटकस्य पुनरुक्तता नास्त्येवेति । अत्रापि तोटकस्येत्युपलक्षणम् । तेन पूर्वोक्तानां कन्दादीनामपि पुनरुक्तता नास्त्येवेति परिहारार्थः । एतेन मतान्तरे वृत्तप्रबन्धस्य वृत्तसामान्यविषयत्वे तु तोटका-दीनां पुरुक्ततैवेति दर्शितं भवति । अत्र तोटकस्य पूर्वार्धमुद्ग्राहः; उत्तरार्धं ध्रुवः; पूर्ववत्पदैराभोगः कर्तव्यः; तेनायं त्रिधातुः; च्छन्दोनियमान्नियुक्तः; स्वरपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २४४, २४५ ॥ इति तोटकप्रबन्धः ॥

(सु०) तोटकं लक्षयति—तोटकच्छन्दसेति । तोटकनाम्ना छन्दसा तोटको गीयते । अन्ते चरणान्ते न्यस्ताः स्वरा यस्मिन् । आक्षिपति—

**तेनैरर्धं द्विपद्यर्धं घटे तेनकमुक्तिकः ।**
**छन्दसा येन केनापि तालेनेष्टेन गीयते ॥ २४६ ॥**
**वृत्तं तस्य च पादान्ते वृत्तान्ते वा स्वरान्क्षिपेत् ।**
**स्वरहीनं तदित्यन्ये वृत्तं छन्दसि चापरे ॥२४७ ॥**
**छन्दश्चित्यां विचेतव्याश्छन्दसां बहवो मताः ।**

नन्विति । पुरस्ताद्वृत्तं वक्ष्यते । तर्हि तोटकस्य वृत्तान्तर्भूतत्वादत्र पुनर्वचनं विफलमिति । परिहरति—सत्यमिति । यदि वृत्तशब्देन छन्दोमात्रमुच्यते तदा भवत्येव पौनरुक्त्यम्; यदा तु वृत्तशब्देन वृत्तनामकस्वरच्छन्दोविशेष उच्यते; तस्मिन्मते न तोटकस्य पौनरुक्त्याभावः ॥ २४४, २४५ ॥ इति तोटकप्रबन्धः ॥

(क०) अथालिक्रमप्रबन्धानां क्रमो न विवक्षित इति दर्शयितुमुद्देशक्रममुल्लङ्घ्य घटं लक्षयति—**तेनैरित्यादि** । तेनकमुक्तिक इति विधेयविशेषणम् । घटे तेनके न्यासः कर्तव्य इत्यर्थः । **तेनैरर्धमिति** । द्विपद्यां पादे छः पञ्च भा गोऽन्त इत्यादिना यावन्मात्रमर्धमुक्तं तावन्मात्रमेव पूर्वार्धमुद्ग्राहसंज्ञकं घटे तेनैर्बद्धं कर्तव्यमित्यर्थः । द्विपद्यर्धमिति प्रत्यासत्तेरयमर्थोऽवगम्यते । अन्यथा सापेक्षस्यार्धशब्दस्य प्रतिसंबन्ध्यभावेनाकाङ्क्षाया अपूरणाद्द्विपद्यर्धमिति तादृशमेव द्विपदीयमर्धं द्विपद्यामिव पदैर्बद्धं कर्तव्यमित्यर्थः । किं च 'अर्धान्तेऽन्ये स्वरानाहुः' इत्यनेनात्रापि वैकल्पिकस्वरप्रयोगो द्रष्टव्यः । त्रिधातुत्वादिकं द्विपदीवद्द्रष्टव्यम् ॥ २४५- ॥ इति घटप्रबन्धः ॥

(सु०) घटं लक्षयति—तेनैरिति । तेनैरर्धं पूर्वोक्तमेव द्विपद्या अर्धं क्रियते चेत्तदा घट इत्युच्यते ॥ २४५- ॥ इति घटप्रबन्धः ॥

(क०) अथ वृत्तं लक्षयति—**छन्दसा येन केनापीति** । छन्दश्चित्येति । छन्दोविचितिसंज्ञकेन ग्रन्थेनेत्यर्थः । **विचेतव्या इति** । अत्र समार्ध-

एकैकमातृकावर्णपूर्वकाणि पदानि चेत् । २४८ ॥
क्रमेण परिगीयन्ते मातृका सा त्रिधा मता ।
दिव्या च मानुषी दिव्यमानुषी चेति तत्र तु ॥ २४९ ॥
दिव्या संस्कृतया वाचा मार्गतालैश्च गीयते ।
मानुषी प्राकृतगिरा देशीतालैश्च निर्मिता ॥ २५० ॥
उभयोर्मिश्रणादुक्ता मातृका दिव्यमानुषी ।

समविषमवृत्तप्रकरणेषु विचित्योपादेया इत्यर्थः । सुगममन्यत् ॥ -२४६, २४७- ॥ इति वृत्तप्रबन्धः ॥

(सु०) अथ वृत्तं लक्षयति—छन्दसेति । येन केनापि छन्दसा स्वाभिलषितेन तालेन यद्गीयते तदिह वृत्तम् । तस्य च वर्णान्ते वा वृत्तान्ते वा स्वरान्क्षिपेत् न्यसेत् । मतान्तरमाह—स्वरहीनमिति ; तत्स्वरैर्विनापि गातव्यमिति केचित् । वृत्तानामपि छन्दोविशेष एवायम् । इतोऽप्यन्ये छन्दसां बहवो भेदाश्छन्दोविचितिनाम्नि मदीये ग्रन्थे विलोकनीयाः ॥ -२४६, २४७- ॥ इति वृत्तप्रबन्धः ॥

(क०) अथ मातृकां लक्षयति—**एकैके**त्यादि । **एकैकमातृकावर्णपूर्वकाणी**ति । मातृका वर्णाः । मातृकाया मन्त्रस्य वर्णा अकारादिक्षकारान्तास्तेष्वेकैकवर्णपूर्वकाणि क्रमेणाकारादिक्रमेण ; प्रथममकारादि पदम् ; द्वितीयमाकारादि ; तृतीयमिकारादि, चतुर्थमीकारादि, पञ्चममुकाराद्येवं क्रमेण क्षकारादिपर्यन्तं पदानि गीयन्ते चेत्सा मातृका । **उभयोर्मिश्रणा**दिति । संस्कृतप्राकृतवाचोर्मार्गदेशीताल्योश्च सहप्रयोगादित्यर्थः । मिश्रणं च द्वेधा संभवति । एकैकपदान्तरितत्वेन संस्कृतप्राकृतवाचोर्मार्गदेशीतालयोश्च प्रयोगेण बोद्धाहे संस्कृतवाङ्मार्गताल्योर्ध्रुवे प्राकृतवाग्देशीताल्योश्च प्रयोगेण

अनिबद्धा निबद्धा च द्विधा सा गद्यपद्यजा ॥ २५१ ॥
सर्वमन्त्रमयी ह्येषा सर्वसिद्धिप्रदायिनी ।
गातव्या नियतैर्नित्यं गीर्वाणगणवल्लभा ॥ २५२ ॥
नन्द्यावर्तः स्वस्तिकश्च द्विधा रागकदम्बकः ।
चतुर्वृत्तश्चतुस्तालो रागराजिविराजितः ॥ २५३ ॥

वोभयोरेकतरेण प्रकारेण मातृका दिव्यमानुषीत्युक्तम् । **अनिबद्धेत्यादि** । सा त्रिविधा मातृका ; अनिबद्धा छन्दोहीना सती गद्यजेत्युच्यते ; निबद्धा छन्दोबद्धा सती पद्यजेति । अत्रोद्ग्राहादिविभागस्त्वकारादीनि षोडश पदान्युद्ग्राहत्वेन गेयानि । ककारादीनि पञ्चत्रिंशत्पदानि ध्रुवत्वेन गेयानीति । आभोगस्तु दिव्यादिभेदानुसारेणानियतवर्णपूर्वकैः संस्कृतादिपदैर्गातृनेतृप्रबन्धनामाङ्कितो गातव्यः । तेनायं प्रबन्धस्त्रिधातुः ; तालादिनियमान्नियुक्तः ; पदतालबद्धत्वाद्भयङ्गस्तारावलीजातिमान् ॥ -२४८—२५२ ॥ इति मातृकाप्रबन्धः ॥

(सु०) मातृकां लक्षयति—एकैकेति । अकाराद्येकैकमातृकावर्णपूर्वकाणि क्रमेण द्विपञ्चाशत्पदानि गीयन्ते चेत्तदा मातृकेत्युच्यते । सा त्रिविधा ; दिव्या, मानुषी, दिव्यमानुषी चेति । एतासां लक्षणमाह—दिव्येति । संस्कृतया वाचा भाषया मार्गतालैश्चच्चत्पुटादिभिर्या गीयते सा दिव्या ; देशभाषया देशीतालैर्या गीयते सा मानुषी ; प्राकृतदेशभाषयोर्मार्गदेशीतालयोर्मिश्रत्वान्मिश्रितानां गाना- द्दिव्यमानुषी । पुनरपि द्वैविध्यमाह—अनिबद्धेति । गद्यैर्विरचिता अनिबद्धा, पद्यैर्विरचिता निबद्धेति । यां सर्वेष्वपि प्रबन्धेषु प्रशस्तामाहुः; तस्याः प्रयोगे नियममाह—सर्वेति । नियतैः शुचिभिः सावधानैश्च ; अन्यथा गाने दोषादिरर्थः ॥ -२४८—२९२- ॥ इति मातृकाप्रबन्धः ॥

(क०) अथ भेदनिर्देशपूर्वकं रागकदम्बं लक्षयति—**नन्द्यावर्तेत्यादि** । अत्र नन्द्यावर्तस्य लक्षणमाह—**चतुर्वृत्त** इत्यादिना । चतुर्वृत्तश्च-

नन्द्यावर्तो भवेत्तस्य तालमानद्वयेन वा ।
उद्ग्राहेणाथवा न्यासो गद्येनैनं परे जगुः ॥ २५४ ॥
तालेनैकेन केचित्तु स्वस्तिको द्विगुणस्ततः ।
अब्जपत्रो ऽब्जगर्भश्च भ्रमराम्रेडिते मते ॥ २५५ ॥
केषांचित्पूर्वपूर्वस्माद्द्विगुणः स्यात्परः परः ।

त्वारि वृत्तानि यस्य सः । **चतुस्ताल** इति । प्रतिवृत्तं भिन्नतालः कर्तव्य इत्यर्थः । **रागराजिविराजित** इति । प्रतिपादं प्रत्यर्धं वा प्रतिवृत्तं वा रागभेदः कर्तव्य इत्यर्थः । **तालमानद्वयेने**ति । यस्मिन्वृत्ते यस्तालः प्रयुक्त-स्तस्य तालस्य मानं प्रमाणं तद्द्वयेनावृत्तिद्वयेनेत्यर्थः । अरुच्या पक्षान्तर-माह—**उद्ग्राहेणाथवे**ति । अत्रेयमरुचिः । यत्राल्पमात्रो झम्पादितालः प्रयुज्यते तत्र तालमानद्वयेन न्यास उपपद्यते । यत्र त्वधिकमात्रः सिंहनन्द-नादिः प्रयुज्यते तत्र नोपपद्यत इत्युद्ग्राहमारभ्य न्यासश्चेदुभयत्राप्युपपद्यत इति भावः । एनं रागकदम्बं पर आचार्या गद्येन जगुरिति मतभेदो दर्शितः । स्वस्तिकस्य लक्षणमाह—**स्वस्तिक** इत्यादि । ततो नन्द्यावर्तात् । द्विगुण इत्यष्टवृत्तोऽष्टतालोऽष्टरागो वेत्यर्थः । **अब्जपत्र** इत्यादि । केषां-चिन्मत उक्तलक्षणः स्वस्तिक एवाब्जपत्र इत्युच्यते । **परः पूर्वस्माद्द्विगुण** इति । अयमर्थः—पूर्वस्मादब्जपत्रात्परोऽब्जगर्भो द्विगुण इति षोडशवृत्तः षोडशतालः षोडशराग इत्यर्थः । अब्जगर्भाद्भ्रमरो द्विगुण इति द्वात्रिंशद्वृत्तो द्वात्रिंशत्तालो द्वात्रिंशद्राग इत्यर्थः । भ्रमरादाम्रेडितो द्विगुण इति चतुःषष्टि-वृत्तश्चतुः षष्टितालश्चतुःषष्टिराग इत्यर्थः । अब्जपत्रादीनां स्वस्तिकभेदानां चतुर्णामपि मतान्तरेण गद्यरूपमप्यवगन्तव्यम् । अत्रोद्ग्राहाद्यवयवविभागस्तु प्रतितालं प्रतिरागं पद्ये वा गद्ये वा पूर्वार्धमुद्ग्राह उत्तरार्धं ध्रुवः । एवं रागतालाश्रयत्वेन यावन्तो गद्यरूपाः पद्यरूपा वा गीयन्ते तावन्तो ऽवयवभूता

द्विधातवः। अवयवी तु रागकदम्बाख्यो महाप्रबन्धः। यथा पदार्थानुमाने प्रतिज्ञादीनामवान्तरवाक्यादीनां समुदाय एव पञ्चावयववाक्यमित्युच्यते, तदपेक्षया प्रतिज्ञादीनि यथा तत्र पदानीत्युपचर्यन्ते ; तथात्रापि तालादियुक्ता यावन्तो रागास्तावन्ति पदानीत्युपचारादुच्यन्ते। 'अवयवकृतं लिङ्गं समुदायस्यापि विशेषकं भवति' इति न्यायेन रागकदम्बो द्विधातुरेव। यथा गोकर्णादौ कृतं लिङ्गं गोविशेषकं भवति तद्वदिति भावः। अत्राभोगाभावेऽप्यन्तिमे रागे पदैर्गातृनेप्रबन्धनामाङ्कितः कर्तव्यः। तत्रोद्ग्राहध्रुवयोः स्वरादिकाङ्गनियमस्यानुक्तत्वेन तदभावाद्गाग्गेयकारेच्छयात्राङ्गयोजना कर्तव्येति लक्ष्यतोऽप्यवगम्यते। तथा हि **गोपालनायकेन** गीतद्वात्रिंशद्रागतालयुक्तगद्यात्मके भ्रमराख्ये स्वस्तिकभेदे रागकदम्बे प्रथमसिंहनन्दनतालबद्धे मालवश्रीपदे पदतालावेवोद्ग्राहध्रुवयोर्योजिताविति द्व्यङ्गत्वम्। तथा दर्पणतालयुक्ते वेलावलीपदे पदाभावात्पञ्चाङ्गता ; धनासीपदादिषु कचिद्बिरुदाभावात्पञ्चाङ्गता। इतरेषु तु षडङ्गत्वमित्यनियताङ्गत्वान्मेदिन्यादिजातिमान्। छन्दस्तालाद्यनियमादनिर्युक्तः। अत्र वृत्तरागतालानां प्रत्येकं बाहुल्याविशेषेऽपि रागाणां प्राधान्याद्रागकदम्बव्यपदेशः, न तालकदम्बव्यपदेशो वा, नापि वृत्तकदम्बव्यपदेशः। यद्वा वृत्ततालयोश्चतुर्वृत्तश्चतुस्ताल इत्यादिनियममारभ्य चतुःषष्टिवृत्ततालपर्यन्तं नियमस्योक्तत्वाद्रागराजिविराजित इत्यनियमद्योतकेन चतुःषष्टिनियमापेक्षया प्रतिवृत्तं प्रत्यर्धं प्रतिपादं राजिपदसामर्थ्याद्रागाणामधिकत्वेऽपि न दोष इति दर्शितम्। तादृगर्थद्योतकत्वाद्रागकदम्बो व्यपदिश्यते, न वृत्तकदम्बः, न तालकदम्बो वा॥ २५३—२५५॥ इति रागकदम्बप्रबन्धः॥

(सु०) रागकदम्बं लक्षयति—नन्द्यावर्त इति। रागकदम्बको द्विप्रकारः ; नन्द्यावर्तकः, स्वस्तिकश्चेति। तत्र नन्द्यावर्तं लक्षयति—चतुर्वृत्तमिति। चत्वारि

**आलापः प्रागतालः स्यात्पृथग्द्विः पदपञ्चकम् ॥ २५६ ॥**
**चच्चत्पुटेन तेनैव स्वराः पाटास्ततः परम् ।**

वृत्तानि यस्मिन्नसौ चतुर्वृत्तः, चतुर्भिस्तालैर्युक्तः। अनेकैर्भागैरुपनिबद्धयमानो नन्द्यावर्तः स्यात्। अस्य तालमानद्वयेन तालो वृत्तिद्वयेनोद्ग्राहेण वा न्यासः समाप्तिः। अन्ये त्वेनं रागकदम्बकं गपैरेव कुर्यादिति। केचिदेकेन तालेनेति। स्वस्तिकं लक्षयति—स्वस्तिक इति। पूर्वेण द्विगुणाष्टकवृत्तो ऽष्टतालश्च स्वस्तिकः। मतान्तरेणान्यद्भेदद्वयमाह—अब्जपत्रेति। केषांचिन्मतेन पूर्वपूर्वद्विगुणयेन भेदद्वयं भवति। षोडश वृत्तः षोडश तालोऽब्जपत्रः। अब्जगर्भो ऽब्जपत्रेऽन्तर्गतः। द्वात्रिंशद्वृत्तो द्वात्रिंशत्तालो भ्रमराम्रेडित इति॥ २९३—२९९-॥ इति रागकदम्बप्रबन्धः॥

(क०) अथ पञ्चतालेश्वरं लक्षयति—**आलापः प्रागतालः स्यादिति**। अताल इति विशेषणेनात्रालापशब्देन रागालाप उच्यते। न गमकालप्तिः। तस्या अप्यालापशब्दवाचकत्वेन वक्ष्यमाणत्वेऽपि सतालत्वात्। प्राक्प्रथममतालस्तालरहित आलापो गेय इत्यर्थः। चच्चत्पुटेन, 'ताले चच्चत्पुटे ज्ञेयं गुरुद्वंद्वं लघुप्लुतम्' इति लक्षितेन। **पृथक्पदपञ्चकं द्विरिति**। पृथगिति भिन्नधातुकमित्यर्थः। तादृशं पदपञ्चकं द्विवारं गेयमित्युक्तं भवति। **तेनैवेति**। चच्चत्पुटेनैवेत्यर्थः। **स्वराः पाटा इति**। स्वराः सरिगादयः, पाटा वाच्याक्षराणि। अयमर्थः—आलापान्तरमेकं पदं गीत्वा तदवयवत्वेन स्वरान्पाटांश्च गायेत्। अनन्तरं द्वितीयं पदं गीत्वा पूर्ववत्स्वरान्पाटान्गायेत्। एवं पदपञ्चकं गातव्यमित्येतदपि पृथक्पदेन द्योत्यत इति। अत्र स्वरपाटयोः क्रमो न विवक्षितः। तेन कश्चित्प्रथमं पाटान्गीत्वा ततः स्वरा गातव्या इति मन्तव्यम्। एवं च पञ्चमपदानन्तरं पाटान्गीत्वा स्वरेषु प्रयुक्तेषु सत्सु वक्ष्यमाणस्य पाटात्मकान्तरस्य पदावयवस्य च पाटस्य प्रत्यासत्त्या प्रतीतं सांकर्यं परिहृतं भवति। स्वरैर्व्यवहितत्वादिति भावः।

द्विचच्चत्पुटमानेन पाटैः पटहसंभवैः ॥ २५७ ॥
कार्यो ऽन्तरस्ततश्चाचपुटेन पदपञ्चकः ।
तद्वृत्तेन स्वराः पाटास्तद्द्विमानेन चान्तरः ॥ २५८ ॥
हुडुक्कपाटैस्तदनु षट्पितापुत्रकेण च ।
तद्द्विमानाच्छङ्खपाटैरन्तरः स्याचतस्तु षट् ॥ २५९ ॥
प्रत्येकं द्विः पदानि स्युः संपक्वेष्टकतालतः ।
ततस्तद्वत्स्वराः पाटास्तद्द्विमानेन चान्तरः ॥ २६० ॥
कांस्यतालोद्भवैः पाटैरुद्घट्टेन पदानि षट् ।

ततः परमित्यादि । द्विचच्चत्पुटमानेनेति । चच्चत्पुटस्यावृत्तिद्वयेनेत्यर्थः । पटहसंभवैः पाटैरिति । 'ङवर्जितः कवर्गश्च तटवर्गौ रहावपि' इति वक्ष्यमाणैरक्षरैरन्तराख्यो गीतावयवः कार्यः । एवमन्तरे पाटनियमस्य कृतत्वादनन्तरोक्तानां पाटानामनियमो वेदितव्यः । तेन यस्य कस्यापि वाद्यस्यानुकरणाक्षराणि शुद्धानि मिश्राणि वा तत्र प्रयोक्तव्यानीत्यर्थः । एवं वक्ष्यमाणेष्वन्तरेषु तालावृत्तिनियमात्सस्वरपाटेषु पदेषु तालावृत्तिनियमो न विद्यत इति मन्तव्यम् । ततश्चाचपुटेनेत्यादि । तद्वदित्यतिदेशेनात्र पृथग्द्विरित्यनुषञ्जनीयम् । हुडुक्कपाटैरित्यादि ।

'कुर्वीत पटहान्वर्णानिह ङेकारवर्जितम् ।
अत्रान्यैरधिकावुक्तौ मन्द्रकारौ मनीषिभिः ॥'

इति वक्ष्यमाणैर्हुडुक्कोद्भवैः । तदन्विति । स्वरपाटकमिति । द्वंद्वैकवद्भावान्नपुंसको निर्देशः । शङ्खपाटैरिति । धुंधुंथोदिगित्यादि प्रचुरैर्वर्णैः । ततस्तु षडिति । अत्र तुशब्दः संपक्वेष्टकस्य पूर्वेभ्यस्तालेभ्यो विशेषद्योतनार्थः । सोऽप्यत्र षट्पदानीत्येतत् । कांस्यतालोद्भवैरिति । ततकट-

ग्राम्यत्तया स्वराः पादाः पाटैर्मुरजसंभवैः ॥ २६१ ॥
अन्तरः पूर्ववत्तस्मादाभोगश्चाविलम्बितः ।
प्रबन्धनाम्ना प्राङ्मानं नेतृनामाथ मङ्गलम् ॥ २६२ ॥
वाक्यमालापके न्यासः पञ्चतालेश्वरो भवेत् ।
वीरावतारः शृङ्गारतिलकश्चेति स द्विधा ॥ २६३ ॥
वीरशृङ्गारयोस्तेन प्रीयन्ते सर्वदेवताः ।

प्रमुखैर्वर्णैः । उद्ग्राहेनेत्यादि । मुरजसंभवैरिति । तकिटतोमित्येतत्प्रधानैः पटहाक्षरैरित्यर्थः । पूर्ववदिति । तालद्विमानेनेत्यर्थः । तस्मादित्यादि । तस्मादन्तरादनन्तरम् । आभोगश्चेति । चकारेणाभोगोऽप्युद्ग्राहेन गीयत इत्यर्थः । अविलम्बित इति । विलम्बादत्यन्तविलक्षणेन द्रुतलयेन प्रयुक्त इत्यर्थः । लोकेऽप्यविलम्बाचिरशब्दाभ्यां शीघ्रप्रतीतेः । एतेन पदेष्वन्तरेषु च मध्यो वा विलम्बो वा लयः कर्तव्य इत्यवगम्यते । एवमाभोगः प्रबन्धनाम्नोपलक्षितो गेयः । अत्रैव गातृनामापि कर्तव्यमित्यनुक्तमपि गम्यते । कुतः ? अमुकः प्रबन्धोऽनेन गीत इति तत्कर्तृत्वसङ्गतेः । नेतृनामप्राङ्मानमिति । प्रथममुद्ग्राहपदेषु तदन्तरेषु च यन्मानं कृतं तन्मानयुक्तं स्तुत्यनाम कर्तव्यमित्यर्थः । अथ मङ्गलं वाक्यमिति । तेनेति शब्दप्रयोग उच्यते । मङ्गलस्य ब्रह्मणः प्रकाशकत्वेनोक्तत्वात्तस्यापि मङ्गलत्वमुपचारान्मङ्गलप्रकाशकं वाक्यं कर्तव्यमित्यर्थः । एकस्यापि तेनशब्दस्य बहुशः प्रयोगादनेकपदात्मकतया तत्समुदायस्य वाक्यवद्वाक्यत्वम् । अथ वान्विताभिधानमतेन वाक्यत्वं द्रष्टव्यम् । आलापके न्यास इति । प्रबन्धादावारब्धमालापमारभ्य गीतमोक्षः कर्तव्य इत्यर्थः । पञ्चभिश्चचपुटादिभिर्मार्गतालैः प्रयुक्तत्वात्प्रबन्धेपूत्कृष्टतयेश्वर इत्युक्तः । वीरावतार इत्यादि । वीरशृङ्गारयोरिति । वीररसे गीतो वीरावतारः । शृङ्गाररसे गीतः

शृङ्गारतिलकः । **तेन प्रीयन्त** इति । तेन पञ्चतालेश्वरेण । चाचपुटादीनां लक्षणानि तालाध्यायादेवावगन्तव्यानि । अत्र पञ्चसु तालेषु मिलित्वा सस्वरपाटादीनि पदानि सप्तविंशतिः । तत्तत्तालपदान्तरेष्वन्तरास्तत्तत्ताला: पाटनिर्मिताः पञ्च । एतेष्वालापान्तराणि दश पदान्युद्ग्राहः कल्पनीयः । इतराणि ध्रुवः कल्पनीयः । आभोगस्तूक्त एव । तेनायं त्रिधातुः । अथ वान्तरशब्देनात्र पृथगवयवो गृह्यते । तदा प्रतितालमाद्यपदद्वयमुद्ग्राहः । उत्तरपदत्रयं ध्रुवः । ध्रुवानन्तरमन्तरः । यद्यपि तस्य सालगसूडस्थरूपकेष्वेवेति नियमः कृतः, तथाप्यत्र वचनसामर्थ्याद्भविष्यतीति । त्रिधातवो ऽवान्तरप्रबन्धाः पञ्च । महाप्रबन्धस्त्वाभोगेन सह चतुर्धातुरित्यवगन्तव्यः । तालनियमान्निर्युक्तो विरुदहीनत्वात्पञ्चाङ्ग आनन्दिनीजातिमान् ॥ -२५६—२६३- ॥ इति पञ्चतालेश्वरप्रबन्धः ॥

(सु०) पञ्चतालेश्वरं लक्षयति—अताल इति । तालहीन आलापः कर्तव्यः । यद्यप्यालापशब्देनाप्यतालत्वं लभ्यते; तथाप्यत्र विहिततालप्राप्तिः स्यादिति, तन्निरासार्थमुक्तमताल इति । ततोऽनन्तरं चच्चत्पुटेन तालेन पञ्च पदानि पृथग्द्विर्गेयानि । तेनैव चच्चत्पुटेन स्वराः पाटाश्च कर्तव्याः । चच्चत्पुटद्वयमानेन पटहसंभवैः पाटाक्षरैरन्तरः कर्तव्यः । ततोऽनन्तरं चच्चत्पुटेन पञ्च पदानि कर्तव्यानि । पृथग्द्विर्गेयानीत्यनुषञ्जनीयम् । तस्यैव वा चच्चत्पुटस्य मानद्वयेन हुडुक्कपाटैरन्तरः कर्तव्यः । ततोऽनन्तरं षट्पितापुत्रकेण पञ्चपदानि पृथग्द्विर्गेयानि । तेनैव स्वराः पाटा गेयाः । ततः षट्पितापुत्रकमानद्वयेन शङ्खपाटैरन्तरपदं गेयम् । ततः संपक्वेष्टकतालेन कांस्यतालपाटैरन्तरः; ततोद्वन्द्वेन षट्पदानि स्वराः पाटा अन्तरश्च; पूर्ववन्मानद्वयेन ततोऽविलम्बितमानेनाभोगः । तत्राभोगे पूर्वमानं प्रबन्धनाम्ना कर्तव्यम् । ततोऽनन्तरं नेतुर्नायकस्य नाम । अथ कल्याणमाशीर्वादनामानि । ततो वाक्यरूपेण मेलापके प्रयोगबहुले न्यासः; पञ्चतालेश्वर इति ज्ञेयः । स द्विप्रकारः; वीररसे वीरावतारः; शृङ्गारे शृङ्गारतिलक इति । तस्मिन्पञ्चतालेश्वरे गीते सति सर्वदेवताप्रीतिः फलम् ॥ -२४६—२६३- ॥ इति पञ्चतालेश्वरप्रबन्धः ॥

**तालार्णवो भूरितालः स द्वेधा गद्यपद्यतः ॥ २६४ ॥**
**तालै रागैश्चतुर्भिः स्याच्छ्रीरङ्गोऽन्ते पदान्वितः ।**

(क०) अथ तालार्णवं लक्षयति—**तालार्णव** इति । **भूरिताल** इति । भूरयो बहवस्ताला अस्येति सः, अत्रैकावृत्तिर्मता तालानां बहुल्यं विवक्षितमिति भूरितालेभ्योऽपि पञ्चतालेश्वरादिभ्योऽस्य भेदो द्रष्टव्यः । तत्र कामतः केषुचित्तालेषूद्ग्राहः केषुचिद्ध्रुवः कर्तव्य इति मन्तव्यम् । आभोगो गातृनेतृप्रबन्धनामाङ्कितः कर्तव्यः । तत्र भूरितालत्वनियमाभावो ऽपि द्रष्टव्यः । तेनायं त्रिधातुः ; तालाद्यनियमादनिर्युक्तः । अत्र पदादि- काङ्गनियमस्यानुक्तत्वात्कामतः षडादिद्व्यन्ताङ्गबद्धः कर्तव्यः । अतो राग- कदम्बवन्मेदिन्यादिजातिमान् ॥ -२६४ ॥ इति तालार्णवप्रबन्धः ॥ इत्यालि- क्रमप्रबन्धाः ॥

(सु०) तालार्णवं लक्षयति—तालार्णव इति । बहुभिस्तालैरुपनिबद्ध्यमान- स्तालार्णवः ॥ -२६४ ॥ इति तालार्णवप्रबन्धः ॥ इत्यालिक्रमप्रबन्धाः ॥

(क०) अथ विप्रकीर्णेषु प्रथमोद्दिष्टं श्रीरङ्गं लक्षयति—**तालैरि-** त्यादि । चतुर्भिरिति प्रत्येकं संबद्ध्यते । चतुर्भिस्तालैश्चतुर्भी रागैश्चतुर्भिर्गी- तैरिति । **अन्ते पदान्वित** इति । सर्वाङ्गकाम इति वक्ष्यमाणत्वात्स्वरादिषु षडङ्गेष्वेवान्ते पदं प्रयोक्तव्यमिति नियमः क्रियते । तेन स्वरादीनीतराणि वाञ्छितक्रमेण प्रयोक्तव्यानीति दर्शितं भवति । एवं प्रतिरागं पदान्तत्वेन षडङ्गयोजना कर्तव्या । अत्रोद्ग्राहादिविभागः प्रबन्धादिनामाङ्कश्च राग- कदम्बवत्कर्तव्यः । तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः । अत्र चतुर्भि- स्तालै रागैरिति संख्याया एव नियमो न स्वरूपनियमः । अतस्तालादि- नियमशङ्का न कर्तव्या । षडङ्गबद्धत्वान्मेदिनीजातिमान् ॥ अथ श्रीविलासं

**स्वरान्तः श्रीविलासः स्यात्ताले रागैश्च पञ्चभिः ॥ २६५ ॥**
**तेनकान्तः पञ्चभङ्गिः पाटैः पञ्चाननोऽन्तिमैः ।**
**रागाभ्यामपि तालाभ्यां स्यादुमातिलकः पुनः ॥ २६६ ॥**
**बिरुदान्तस्त्रिभिस्तालै रागैः सर्वाङ्गिका इमे ।**

लक्षयति — **स्वरान्त** इत्यादि । स्पष्टार्थः । अनुक्तमन्यच्छ्रीरङ्गवदनुसंधेयम् ॥ २६५ ॥ इति श्रीरङ्गश्रीविलासप्रबन्धौ ॥

(सु०) एवमालिक्रमप्रबन्धानुक्त्वा विप्रकीर्णान्निरूपयिषुः प्रथमनिर्दिष्टं श्रीरङ्गं लक्षणभङ्ग्या सङ्गमयति—**तालैरि**ति । चतुर्भिस्तालैर्यो विरच्यते स श्रीरङ्गः । तस्य चान्ते पदैरन्वितः कर्तव्यः । श्रीविलासं लक्षयति—**स्वरान्त** इति । पञ्चभिस्तालैः पञ्चभी रागैश्चान्ते स्वरसंयुक्तः श्रीविलासः ॥ २६९ ॥ इति श्रीरङ्गश्रीविलासप्रबन्धौ ॥

(क०) अथ पञ्चभङ्गिपञ्चननौ लक्षयति—**तेनकान्त** इति । अन्तिमैस्तेनकैः पञ्चभङ्गिः । अन्तिमैः पाटैः पञ्चाननः स्यात् । रागाभ्यां तालाभ्यामित्युभयोर्योजनीयम् । इतरत्तु पूर्ववत् । अथोमातिलकं लक्षयति —**स्यादुमातिलक** इत्यादि । स्पष्टार्थः । अन्यत्पूर्ववत् । अत्र केचन श्रीरङ्गादीनां पदाद्यन्तत्वमात्रनियमेनेतराङ्गक्रमस्यानुक्तत्वात्कूटतानवत्प्रस्तारं कल्पयन्ति । तत्र स्वराणां क्रमस्य सिद्धत्वात्तच्छोभते । अत्र त्वङ्गानां तदभावादभित्तिचित्रप्रायमेतत् ॥ २६६- ॥ पञ्चभङ्गिपञ्चाननोमातिलकप्रबन्धाः ॥

(सु०) पञ्चभङ्गिं लक्षयति—**तेनकान्त** इति । रागद्वयेन तालद्वयेन च निबद्ध्यमानान्ते तेनकसंयुक्ता पञ्चभङ्गिः ॥ पञ्चाननं लक्षयति—**पाटैरि**ति । पञ्चभङ्गिलक्षणवदन्तिमैः पाटैः पञ्चाननः ॥ उमातिलकं लक्षयति—**स्यादि**ति । त्रिभिस्तालैस्त्रिभी रागैर्निबद्धोऽन्ते विरुदसंयुक्त उमातिलकः । इमे श्रीरङ्गादयः

आद्यौ द्विद्विगणौ पादौ तृतीयश्च चतुर्गणः ॥ २६७ ॥
चतुर्थस्त्रिगणः पादेष्वेकादश गणा इमे ।
रतेः षष्ठश्च दशमः शेषाः स्युर्मान्मथा गणाः ॥ २६८ ॥
गीत्वाद्यपादौ तदनु किंचिच्छेषं तृतीयकम् ।

पत्र, सर्वाङ्गिकाः सर्वाङ्गैर्युक्ता ज्ञातव्याः ॥ इति पत्रभङ्गिपत्राननोमातिलकप्रबन्धाः ॥ २६६- ॥

(क०) अथ त्रिपदीं लक्षयति—आद्यावित्यादि । आद्यौ प्रथमद्वितीयौ पादौ । द्विद्विगणाविति । द्वौ द्वौ गणौ ययोस्तौ । अत्र वीप्सया प्रत्येकं द्विगणावित्यर्थः । 'शेषाः स्युर्मान्मथा गणाः' इति वक्ष्यमाणत्वात्पादद्वयेऽपि चत्वारो मान्मथगणा भवन्ति । ते च, 'एवं मध्याभवा भेदा अष्टौ कामगणा स्मृताः' इति प्रागेवोक्ताः । तृतीयश्चेति । तृतीयपादश्चतुर्गणः । चकारेणात्रापि कामगणा इत्यवगम्यते । अत्र रतेः षष्ठ इति वक्ष्यमाणत्वाद्द्वितीयो रतिगणः । इतरे त्रयो ऽपि कामगणाः । चतुर्थ इत्यादि । चतुर्थः पादश्च त्रिगणः । चकारेणात्रापि कामगणा इति गम्यते । तत्र दशमश्चेति वक्ष्यमाणत्वादत्र पादे द्वितीयो रतिगण इतरौ कामगणौ । एकादशेत्यादि । इम इति पादचतुष्टयेऽप्युक्ताः संभूयैकादशगणा भवन्ति । रतेरित्यादि । षष्ठो दशमश्च । रतेरिति संबन्धे षष्ठी । रतिगण इत्यर्थः । सो ऽपि, 'अत्युक्तायास्तु चत्वारो भेदा रतिगणा मताः' इत्यत्र प्रागुक्तेषु चतुर्षु भेदेष्वेकः । षष्ठ इति चतुर्गणात्मकस्य तृतीयपादस्य द्वितीयो गण उच्यते । दशम इति त्रिगणात्मकस्य चतुर्थपादस्य द्वितीयो गण उच्यते । एतौ रतिगणौ कर्तव्यावित्यर्थः । शेषा इति । एकादशसु मध्ये षष्ठदशमौ हित्वेतरे नवगणा मान्मथाः कर्तव्या इत्यर्थः । गाने नियममाह—गीत्वेत्यादि । किंचिच्छेषं तृतीयकमिति । तृतीयपादमादौ किंचिदवशिष्टं गीत्वा

**ततः समग्रं तं गीत्वा चतुर्थो यदि गीयते ॥ २६९ ॥**

**तदा स्यात्त्रिपदी तालहीना कर्णाटभाषया ।**

**समे षोडश मात्राः स्युः पादे पञ्चदशायुजि ॥ २७० ॥**

ततोऽनन्तरं तृतीयपादं समग्रमशेषं गीत्वा चतुर्थः पादो गीयते चेत्, सा त्रिपदी स्यात् । अस्या लक्षणतश्चतुष्पादप्रयुक्तत्वेऽप्याद्ययोरेकपादत्वप्रतीतेः श्रुतिकृतत्वात्तामनुरुध्य त्रिपदीव्यपदेश उपपद्यत एव । तत्राद्यं पादद्वयमुद्ग्राहः । द्वितीयं पादद्वयं ध्रुवः । विप्रकीर्णेषु, 'ओव्यादयश्च चत्वारो भवन्त्याभोगवर्जिताः' इति वक्ष्यमाणेन वचनेन चतुर्णामेवाभोगनिषेधात् । इतरेषां पुनः, 'अनुक्ताभोगवस्तूनां पदैराभोगकल्पना' इति वक्ष्यमाणत्वादत्र पदैराभोगः कल्पनीयः । तेनायं त्रिधातुः; गणभाषानियमान्निर्युक्तः । अस्या द्विपदीप्रकृतिकत्वात्, 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन तत्रोक्तः स्वरप्रयोगोऽपि प्रबन्धतासिद्ध्यै ध्रुवानन्तरमध्याहर्तव्यः । अन्यथा तालादिहीनत्वेन पदैकाङ्गतया तारावल्यादिप्रबन्धजात्ययोगादप्रबन्धतैव स्यात् । अतोऽयं पदस्वरबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ -२६७–२६९- ॥

इति त्रिपदीप्रबन्धः ॥

(सु०) त्रिपदीं लक्षयति—आद्याविति । आद्यौ द्वौ चरणौ गणद्वययुतौ कार्यौ; तृतीयस्तु गणचतुष्टययुक्तः; चतुर्थो गणत्रययुक्तः । एवं चतुर्षु पादेष्वेकादश गणा भवन्ति । तेष्वष्टौ रतिगणाः कर्तव्याः । षष्ठो दशमश्च, अन्ये मान्मथाः पूर्वोक्ताः कामगणाः कर्तव्याः । तत्राद्यौ पादौ गीत्वा ततोऽनन्तरं तृतीयश्चरणः किञ्चिन्न्यूनः समग्रश्च द्विर्गातव्यः । ततश्चतुर्थश्चरणो गीयते सा कर्णाटभाषाबद्धा तालवर्जिता त्रिपदी ज्ञातव्या ॥ -२६७—२६९- ॥

इति त्रिपदीप्रबन्धः ॥

(क०) अथ चतुष्पदीं लक्षयति—**सम** इत्यादि । अस्याश्चतुष्पद्याः समपादे द्वितीये चतुर्थे च प्रत्येकं षोडश मात्राः स्युः । अयुजि विषमे

**यस्यां भिन्नार्थयमकावर्धौ सा तु चतुष्पदी ।**
**स्वरतेनकसंयुक्ता तेनकन्याससंयुता ॥ २७१ ॥**

प्रथमे तृतीये च पादे पञ्चदश मात्रा भवन्ति । **यस्यामर्धौ भिन्नार्थयमका-विति** । भिन्नोऽर्थोऽभिधेयं यस्य तत्; भिन्नार्थं यमकं ययोरिति तथोक्तौ । **यमकं** नाम—

'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।
यमकं पादतद्भागवृत्ति तद्यात्यनेकताम् ॥'

इत्युक्तलक्षणम् । ननु च यमकलक्षणेनैव भिन्नार्थत्वे सिद्धे भिन्नार्थेऽपि यमकविशेषणं व्यवच्छेद्याभावाद्वैयर्थ्यमापद्यत इति चेत्सत्यम् । येषां मते त्वभिन्नार्थानामपि तात्पर्यभेदेन यमकत्वमङ्गीक्रियते, तन्मते व्यवच्छेद्यस्य विद्यमानत्वेनार्थवत्त्वाददोषः । **अर्धाविति** । अत्रार्धयोर्मात्रासामान्येन 'अर्धं समेंऽशके' इत्यभिधानान्नपुंसकत्वे कर्तव्येऽपि स्वरतेनकयोगस्य वक्ष्यमाण-त्वादर्धयोस्तद्द्वारकवैषम्यसंभवादर्धाविति पुंल्लिङ्गनिर्देश उपपन्नो द्रष्टव्यः । **स्वरतेनकसंयुक्तेति** । पूर्वार्धे स्वरयुक्तोत्तरार्धे तेनकयुक्तेत्यवगन्तव्यम् । एतच्चार्धाविति पुंल्लिङ्गनिर्देशादेव ज्ञायते । **तेनकन्याससंयुतेति** । पुनस्ते-नकमारभ्य न्यासं कुर्यादित्यर्थः । त्रिपद्यादीनां तिसृणां समानधर्मत्वाद्विशेष-लक्षणव्यतिरेकेणैकत्रोक्तमन्यत्र, 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन द्विपदीषट्पद्योरुक्तं तालहीनत्वं कर्णाटभाषानिर्मितत्वं च चतुष्पद्यामनुक्तमपि ताभ्यामानेतव्यम् । अत्र सस्वरः पूर्वार्धे उद्ग्राहः । सतेनक उत्तरार्धो ध्रुवः । आभोगः पूर्ववत्कल्पनीयः । तेनायं त्रिधातुः; मात्रासंख्याभाषानियमा-न्नियुक्तः; पदस्वरतेनकबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ -२७०, २७१ ॥
इति चतुष्पदीप्रबन्धः ॥

षष्ठस्तृतीयस्त्रिगणः पृथग्द्विद्विगणाः परे ।
चत्वारश्चरणा बाणप्रान्तौ षष्ठतृतीयकौ ॥ २७२ ॥
शेषास्तु मान्मथगणा यस्यां सा षट्पदी मता ।
कर्णाटभाषया तालवर्जिता नादमुक्तिका ॥ २७३ ॥

(सु०) चतुष्पदीं लक्षयति—सम इति । समे द्वितीयचतुर्थचरणयोः षोडश मात्राः, अयुजि आद्ये तृतीये च चरणे पञ्चदश; अङ्घ्रिद्वये च भिन्नौ यमकौ सा चतुष्पदी । एतस्यां स्वरतेनकेन न्यासः ॥ -२७०—२७१- ॥
इति चतुष्पदीप्रबन्धः ॥

(क०) अथ षट्पदीं लक्षयति—षष्ठ इत्यादि । अत्र षट्सु पादेषु षष्ठस्तृतीयश्च पादस्त्रिगणो वक्ष्यमाणगणत्रययुक्तः कर्तव्यः । परे चत्वारश्चरणाः प्रथमद्वितीयचतुर्थपञ्चमाः पादाः पृथक्प्रत्येकं द्विद्विगणाः; वक्ष्यमाणगणद्वय-युक्ताः कर्तव्याः । तमेव गणविशेषं दर्शयति—**बाणप्रान्तावित्यादिना** । षष्ठतृतीयकौ पादौ बाणप्रान्तौ बाणगणः प्रान्ते ययोस्तौ । गणत्रयात्मकयोः षष्ठतृतीययोः पादयोः; 'शेषास्तु मान्मथगणाः' इति वक्ष्यमाणत्वात्प्रत्येकं प्रथमद्वितीयौ कामगणौ कृत्वा तृतीयो बाणगणः कर्तव्यः । सोऽपि, 'तद्वद्बाणगणा भेदाः प्रतिष्ठायास्तु षोडश' इत्यत्र प्रागुक्तेषु षोडशस्वेकः । **शेषास्त्विति** । पादषट्कं मिलित्वा च चतुर्दशसु गणेषु सप्तमचतुर्दश-योर्बाणगणत्वेनोपयुक्तयोरन्ये द्वादश गणाः शेषाः, ते च कामगणाः कर्तव्या इत्यर्थः । **नादमुक्तिकेति** । नादशब्देनात्र स्थायिस्वरो विवक्ष्यते । तं सरिगादिवर्णोच्चाररहितं नादरूपमेवोच्चार्य न्यासं कुर्यादित्यर्थः । चतुष्पदी-षट्पद्योर्व्यपदेशोऽन्वर्थो द्रष्टव्यः । अत्र पूर्वं पादत्रयमुद्ग्राहः; उत्तरं तु ध्रुवः; पूर्ववदाभोगः कल्पनीयः । तेनायं त्रिधातुः; गणभाषानियमा-न्निर्युक्तः, त्रिपदीवदन्ते स्वरप्रयोगस्य कर्तव्यत्वात्पदस्वराभ्यां द्व्यङ्गः, तारावली-

मेदा वेद्यास्त्रिपद्यादेश्छन्दोलक्ष्मणि भूरयः ।
मात्राः पञ्चदशाद्येऽङ्घ्रौ तृतीये पञ्चमे तथा ॥ २७४ ॥
सूर्यास्तुर्ये द्वितीये च स्वरपाटान्तमादिमम् ।
अपरं स्वरतेनान्तमर्धं तदनु दोधकः[1] ॥ २७५ ॥
यस्य स्यात्तेनके न्यासस्तद्वस्तु कवयो विदुः ।

जातिमान् । भेदा इत्यादि । त्रिपद्यादेरिति । आदिशब्देन चतुष्पदी-षट्पद्यौ गृह्येते । एतासां भूरयो बहवो भेदाश्छन्दोलक्ष्मणि छन्दः-शास्त्रे शेषा गाथास्त्रिभिश्चतुर्भिः षड्भिश्चरणैश्चोपलक्षिता इत्यादिका वेद्या अवगन्तव्याः ॥ २७२, २७३- ॥ इति षट्पदीप्रबन्धः ॥

(सु०) षट्पदीं लक्षयति—षष्ठ इति । षष्ठस्तृतीयचरणस्त्रिगणः, परे प्रथमद्वितीयचतुर्थपञ्चमाश्चत्वारः पृथक्प्रत्येकं द्विद्विगणाः । तेषु षष्ठतृतीययोरन्त्य-तृतीययोर्वाणगणः; अन्ये सर्वेऽपि मान्मथगणाः; सा कर्णाटभाषोपनिबद्धा पदन्यासा षट्पदी ॥ -२७२, २७३- ॥ इति षट्पदीप्रबन्धः ॥

(क०) अथ वस्तुसंज्ञं लक्षयति—मात्रा इत्यादि । आद्येऽङ्घ्रौ मात्राः पञ्चदश स्युः । तृतीये पञ्चमे पादे तथा । यथा प्रथमाङ्घ्रौ पञ्चदश मात्रास्तथा तृतीयपञ्चमयोः प्रत्येकमित्यर्थः । तुर्ये द्वितीये च पादे सूर्या द्वादश मात्रा भवन्ति । एवं पञ्च पादाः । अत्र सामान्यन्यायेनाद्यं पादद्वयमादिममर्धं तत्स्वरपाटान्तं कर्तव्यम् । अवशिष्टं पादत्रयमपरमर्धं तत्स्वर-तेनान्तं कर्तव्यम् । तदनु तेनकानन्तरं दोधकः; दोधकः पूर्वोक्तदोधकं नाम छन्दोविशेषः कर्तव्यः । अत्र तेनकान्तमर्धद्वयमुद्ग्राहः; दोधको ध्रुवः; पूर्ववदाभोगः कल्पनीयः; तेनायं त्रिधातुः; मात्रादिनियमापेक्षया निर्युक्तः ।

[1] द्रोहक इति सुधाकरपाठः.

**यत्र तेनैः स्वरैः पाटैः पदैर्विजयतालतः ॥ २७६ ॥**
**गीयते विजयस्तेनैर्न्यासः स विजयो मतः ।**
**पादत्रयं त्रिपथके पाटैश्च विरुदैः स्वरैः ॥ २७७ ॥**

तालनिषेधश्रुतेरभावादनियतताल्त्वापेक्षयायमनिर्युक्तश्च । नन्वेकस्यैव निर्युक्तत्वमनिर्युक्तत्वं च विरुद्धमिति चेन्न; अपेक्षाबुद्धिनिमित्तस्य भिन्नत्वात्। यथैकस्यैव देवदत्तस्य स्वपुत्रापेक्षया पितृत्वं स्वपित्रापक्षेया पुत्रत्वं चेति । यत्रैवंविधा च विरोधप्रतीतिस्तत्रैवंविधः परिहारो द्रष्टव्यः। विरुदव्यतिरिक्ताङ्गबद्धत्वात्पञ्चाङ्ग आनन्दिनीजातिमान् ॥-२७४,२७५-॥ इतिवस्तुप्रबन्धः ॥

(सु०) वस्तु लक्षयति—मात्रा इति । प्रथमतृतीयपञ्चमपादेषु पञ्चदश मात्राः; द्वितीयतुरीययोः सूर्या द्वादश मात्राः; प्रथमार्धेऽन्ते स्वराः पाटाः; द्वितीयार्धस्यान्ते स्वरास्तेनकाः; तदनन्तरं पूर्वलक्षितो दोहकः; तेनकेषु समाप्तिस्तद्वस्तु ॥ -२७४—२७५- ॥ इति वस्तुप्रबन्धः ॥

(क०) अथ विजयं लक्षयति—यत्रेति । अत्र तेनादीनां पाठक्रमस्य विवक्षितत्वात्तथैव प्रयोक्तव्याः । **विजयतालत** इति । 'विजयः प्लुतो लघुः' इति तस्य लक्षणं वक्ष्यते । अत्र तेनैः स्वरैरुद्ग्राहः कर्तव्यः । पाटैः पदैर्ध्रुवः कर्तव्यः । पदान्तैरराभोगः कल्पनीयः। तेनायं त्रिधातुः; तालनियमान्निर्युक्तः; विरुदाभावात्पञ्चाङ्गः; आनन्दिनीजातिमान् ॥ -२७६- ॥ इति विजयप्रबन्धः ॥

(सु०) विजयं लक्षयति—यत्रेति । यत्र राज्ञां विजयो गीयते तेनैः स्वरैः पाटैः पदैर्विजयतालेन; तेनकेषु समाप्तिः स विजयः ॥ -२७६- ॥ इति विजयप्रबन्धः ॥

(क०) अथ त्रिपथं लक्षयति—पादत्रयमित्यादि । पाटैरेकः पादः, विरुदैर्द्वितीयः, स्वरैस्तृतीयः, तत्र प्रथमं पादद्वयमुद्ग्राहः; तृतीयः पादो

स्वरैः पाटैः पदैस्तेनैर्वर्णैः स्थाय्यादिभिः क्रमात् ।
चत्वारश्चरणा गेया ग्रहे न्यासश्चतुर्मुखे ॥ २७८ ॥
स्वरैः पाटैश्च विरुदैस्तेनकैर्यो विरच्यते ।
सिंहलीलेन तालेन सिंहलीलः स उच्यते ॥ २७९ ॥

ध्रुवः । पदैराभोगः कल्पनीयः । तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः; तेनकाभावात्पञ्चाङ्गः; आनन्दिनीजातिमान् ॥ -२७७ ॥ इति त्रिपथः प्रबन्धः ॥

(सु०) त्रिपथं लक्षयति—पादत्रयमिति । यत्र पाटैर्विरुदैः स्वरत्रयेण पादा गीयन्ते स त्रिपथः ॥ -२७७- ॥ इति त्रिपथप्रबन्धः ॥

(क०) अथ चतुर्मुखं लक्षयति—**स्वरैरित्यादि** । **स्थाय्यादिभिः क्रमादिति** । स्थायिवर्णेन स्वरैः प्रथमः पादः; आरोहिवर्णेन पाटैर्द्वितीयः; अवरोहिवर्णेन पदैस्तृतीयः; संचारिवर्णेन तेनैश्चतुर्थ इति क्रमो द्रष्टव्यः । ग्रह उद्ग्राहे न्यासः कर्तव्यः । अत्र प्रथमं पादद्वयमुद्ग्राहः, द्वितीयं पादद्वयं ध्रुवः । पदान्तरैराभोगः कर्तव्यः । तेनायं त्रिधातुः, तालाद्यनियमादनिर्युक्तः, विरुदाभावात्पञ्चाङ्गः, आनन्दिनीजातिमान् ॥ २७८ ॥ इति चतुर्मुखप्रबन्धः ॥

(सु०) चतुर्मुखं लक्षयति—स्वरैरिति । स्थायिनि वर्णे स्वरैरेकः पादः; आरोहिणि वर्णे पाटैर्द्वितीयः; अवरोहिणि वर्णे पदैस्तृतीयः; संचारिणि वर्णे तेनैश्चतुर्थः; ग्रहे समाप्तिः स चतुर्मुखः ॥ -२७८- ॥ इति चतुर्मुखप्रबन्धः ॥

(क०) अथ सिंहलीलं लक्षयति—**स्वरैरित्यादि** । **सिंहलीलेन तालेनेति** । 'तालाद्यन्तं दत्रयं सिंहलीलः' इति तस्य लक्षणं

स्वनामतालके हंसलीलेऽङ्घ्री पदपाटकैः ।
पदैः स्वरैर्दण्डकेन छन्दसा दण्डको मतः ॥ २८० ॥
तस्य भूरितरा भेदाश्छन्दोलक्ष्मणि भाषिताः ।

वक्ष्यते । अत्र स्वरैः पाटैरुद्ग्राहः ; बिरुदैस्तेनकैश्च ध्रुवः ; पदैराभोगः कर्तव्यः ; तेनायं त्रिधातुः ; तालनियमान्नियुक्तः ; स्वरादिषडङ्गबद्धत्वान्मेदिनी-जातिमान् ॥ -२७९ ॥ इति सिंहलीलप्रबन्धः ॥

(सु०) सिंहलीलं लक्षयति—स्वरैरिति । वक्ष्यमाणेन सिंहलीलेन तालेन स्वरपाटादिभिर्यो विरचितः स सिंहलीलः ॥ -२७९ ॥ इति सिंहलीलप्रबन्धः ॥

(क०) अथ हंसलीलं लक्षयति—स्वनामेत्यादि । स्वनामतालक इति ; हंसलीलतालयुक्त इत्यर्थः । हंसलीलः ; 'यगणश्च लघुर्गुरुः' इति तस्य लक्षणं वक्ष्यते । पदपाटकैरङ्घ्री इति । पदैरेकः पादः ; पाटैर्द्वितीयः ; अत्र पदैरुद्ग्राहः ; पाटैर्ध्रुवः ; पदान्तरैराभोगः ; तेनायं त्रिधातुः ; तालनियमान्नि-र्युक्तः ; पदपाटतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २७९- ॥ इति हंसलीलप्रबन्धः ॥

(सु०) हंसलीलमाह—स्वरैरिति । हंसलीलेन तालेन पादैरेकोऽङ्घ्रिः ; पाटैर्द्वितीयो यस्मिन् विरच्यते स हंसलीलः ॥ २७९- ॥ इति हंसलीलप्रबन्धः ॥

(क०) अथ दण्डकं लक्षयति—पदैरिति । दण्डकेन छन्दसेति । 'दण्डको नौ रः' इति तस्य लक्षणम् । अस्यार्थः—"यस्य पादे द्वौ नकारौ, रेफाश्च सप्त भवन्ति, तस्य दण्डक इति नाम भवति । षड्विंशत्यक्षराया उत्कृतेः समनन्तरं दण्डकस्य पाठात्सप्तविंशत्यक्षरत्वमेव युक्तम् । सर्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रस्तारः प्रवृत्तः । इत ऊर्ध्वं पुनरेकैकरेफवृद्ध्या प्रस्तारः कर्तव्यः । दण्डको नौ र इति श्रवणात् । तस्योदाहरणं तु—

**झम्पटच्छन्दसा गेयः क्रीडातालेन झम्पटः ॥ २८१ ॥**

'इह हि भवति दण्डकारण्यदेशे स्थितिः पुण्यभाजां मुनीनां मनोहारिणि
त्रिदशविजयवीर्यदृप्यद्दशग्रीवलक्ष्मीविरामेण रामेण संसेविते ।
जनकयजनभूमिसंभूतसीमन्तिनीसीमसीतापदस्पर्शपूताश्रमे
भुवननमितपादपद्माभिधानाम्बिकातीर्थयात्रागतानेकसिद्धाकुले ॥'

अत्र पादान्ते यतिः" इति । **तस्येत्यादि** । तस्य दण्डकस्य । **भूरितरा भेदा** इति । चण्डवृष्टिप्रपातप्रचितादयः; छन्दोलक्ष्मणि छन्दःशास्त्रे भाषिता उक्तास्ततो ऽवगन्तव्याः । तत्र पदैर्निर्मितं दण्डकस्य पूर्वार्धमुद्ग्राहः; स्वरैर्निर्मितमुत्तरार्धं ध्रुवः; पदान्तरैराभोगः; तेनायं त्रिधातुः; छन्दोनियमान्नियुक्तः; स्वरपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ -२८०- ॥ इति दण्डकप्रबन्धः ॥

(सु०) दण्डकं लक्षयति—**पदैरिति** । दण्डकनाम्ना छन्दसा पदैः स्वरैश्च दण्डकः कर्तव्यः; दण्डकनामछन्दः, छन्दःशास्त्रप्रसिद्धाः चण्डवृष्टिप्रभृतयः । तस्य दण्डकस्य भूरितरा भेदाः बहवो भेदाश्छन्दःशास्त्रे ज्ञातव्याः ॥ २८०- ॥ इति दण्डकप्रबन्धः ॥

(क०) अथ झम्पटं लक्षयति—**झम्पटच्छन्दसेति** । 'झम्पटं त्रिपदैः प्राहुः' इति तस्य लक्षणं गाथाभेदेषु द्रष्टव्यम् । **क्रीडातालेनेति** । 'क्रीडाद्रुतौ विरामान्तौ' इति तस्य लक्षणं वक्ष्यते । तत्राद्यं पादद्वयमुद्ग्राहः; तृतीयः पादो ध्रुवः; पूर्ववदाभोगः कर्तव्यः; तेनायं त्रिधातुः; छन्दस्तालनिबद्धत्वान्नियुक्त एव; पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ -२८१ ॥

(सु०) झम्पटं लक्षयति—**झम्पटेति** । झम्पटश्छन्दःशास्त्रे प्रसिद्धः; तेन छन्दसा क्रीडातालेन गीयते तत् झम्पटम् ॥ -२८१ ॥ इति झम्पटप्रबन्धः ॥

पदैः पाटैश्च विरुदैः कन्दुकः परिगीयते ।
स्वरैः पाटैः पदैरुक्तस्त्रिभङ्गिः स च पञ्चधा ॥ २८२ ॥
एकस्त्रिभङ्गितालेन वृत्तेनान्यस्त्रिभङ्गिना ।
ताले रागैस्त्रिभिर्यद्वा यद्वा वृत्तत्रयान्वितः ॥ २८३ ॥
यद्वा देवत्रयस्तुत्या तालत्रैगुण्यमुक्तकः ।

(क०) अथ कन्दुकं लक्षयति—**पदैरि**त्यादि । अयमपि गाथाभेदो द्रष्टव्यः । अत्र पदैः प्रथमः पादः; पाटैर्द्वितीयः; विरुदैस्तृतीयः; उद्ग्राहादिविभागः पूर्ववत्; तालाद्यनियमादनिर्युक्त एव; स्वरतेनकाभावाच्चतुरङ्गो दीपनीजातिमान् । सिंहलीलादिषु पञ्चसूद्ग्राहे न्यासः कर्तव्यः । एवमनुक्तन्यासस्थानेषु सर्वत्र न्यायो ऽनुसंधेयः ॥ २८१- ॥ इति कन्दुकप्रबन्धः ॥

(सु०) कन्दुकं लक्षयति—पदैरिति । पदैः पाटैर्विरुदैस्त्रिभिरङ्गैश्च निर्मितः कन्दुकप्रबन्धः ॥ २८१- ॥ इति कन्दुकप्रबन्धः ॥

(क०) त्रिभङ्गिं लक्षयति—**स्वरैः पाटै**रित्यादि । **त्रिभङ्गितालेने**ति । 'त्रिभङ्गिः सगणाद्गुरुः' इति तस्य लक्षणं वक्ष्यते । **वृत्तेने**ति । त्रिभङ्गिवृत्तमपि गाथाभेदो द्रष्टव्यः । स्पष्टार्थमन्यत् । पञ्चसु त्रिभङ्गिपदेष्वपि सामान्यलक्षणोक्तः स्वरपाटपदानां प्रयोगः क्रमेण कर्तव्यः । उद्ग्राहादिविभागो ऽपि भेदेषु यथायोगमुन्नेयः । अन्यपदैराभोगः; तेनायं त्रिधातुः; क्वचिच्छन्दस्तालादिनियमान्निर्युक्तः; अन्यत्र तदभावादनिर्युक्तः; विरुदतेनकाभावाच्चतुरङ्गो दीपनीजातिमान् ॥ -२८२, २८३- ॥

(सु०) त्रिभङ्गिं लक्षयति—पदैरिति । पदैः पाटैः स्वरैश्च त्रिभङ्गिर्गीयते । स पञ्चप्रकारः । कश्चित्त्रिभङ्गिनाम्ना वक्ष्यमाणेन तालेन गीयते; कश्चित्त्रिभङ्गिनाम्ना छन्दसा; कश्चित्त्रिभिस्ताले रागैश्च; कश्चित्त्रिभिश्छन्दोभिः; कश्चित्त्रयाणां

पदैः सविरुदैः पाटैस्तेनैर्हरविलासकः ॥ २८४ ॥
पदैश्च विरुदैस्तेनैर्निर्दिशन्ति सुदर्शनम् ।
पदैः स्वरैश्च विरुदैरुद्ग्राहादित्रयं क्रमात् ॥ २८५ ॥
एकद्वित्राश्च तालाः [1]स्युर्गातव्यो मालवश्रिया ।

देवानां स्तुत्या युक्त इति पञ्चविधस्त्रिभङ्गिप्रबन्धः ॥ -२८२, २८३- ॥ इति त्रिभङ्गिप्रबन्धः ॥

(क०) अथ हरविलासं लक्षयति—**पदैरित्यादि**। सविरुदैरिति पदविशेषणम्। अतो विरुदस्योपसर्जनत्वश्रुत्या पदे शेषत्वं प्रतीयते, तेन सविरुदैः पदैरेकं गीतखण्डं गायेदिति भावः। अनन्तरं पाटैर्द्वितीयः खण्डः। ततस्तेनैस्तृतीयः। तत्र प्रथमखण्ड उद्ग्राहः; द्वितीयतृतीयौ ध्रुवौ; पदान्तरैराभोगः; अतोऽयं त्रिधातुः; तालायनियमादनिर्युक्तः; स्वराभावात्पञ्चाङ्ग आनन्दिनीजातिमान्। अथ सुदर्शनं लक्षयति—**पदैश्चेत्यादि**। स्पष्टार्थः। स्वरपाटाभावाच्चतुरङ्गोऽयं दीपनीजातिमान् ॥ २८४- ॥ इति हरलविलाससुदर्शनप्रबन्धौ ॥

(सु०) हरविलाससुदर्शनौ लक्षयति—पदैरिति। स्पष्टार्थौ ॥ २८४- ॥ इति हरविलाससुदर्शनप्रबन्धौ ॥

(क०) अथ स्वराङ्कं लक्षयति—**पदैरित्यादि**। पदैरुद्ग्राहः; स्वरैर्मेलापः, विरुदैर्ध्रुव इत्ययं क्रमः। अत्रोद्ग्राहादित्रयमिति विशेषोक्त्या मेलापकसद्भावादनुक्तविशेषेषु प्रबन्धेषु मेलापकाभावो ज्ञायते। **एकद्वित्रास्तालाश्चेति**। उद्ग्राह एकस्तालः, मेलापके द्वौ तालौ, ध्रुवे त्रयस्तालाः कर्तव्याः स्युः। **मालवश्रियेति**। मालवश्रीसंज्ञकेन रागेण गातव्य

[1] स्युः स्वराङ्के न्यसनं स्वरैः। इत्यधिकः पाठः।

श्रीवर्धनः स्याद्बिरुदैः पाटैरपि पदैः स्वरैः ॥ २८६ ॥
तालमानद्वयन्यासो निःशङ्केन प्रकीर्तितम् ।
पदैश्च विरुदैर्हर्षवर्धनः स्वरपाटकैः ॥ २८७ ॥
छपद्वयं दो वदनं स्वरपाटयुतान्तरम् ।
तथोपवदनं प्रोक्तं छगणाच्छदतैर्युतम् ॥ २८८ ॥

इत्यर्थः । आभोगः पूर्ववत्कर्तव्यः; तेनायं चतुर्धातुः; रागनियमान्निर्युक्तः; पाटतेनकाभावाच्चतुरङ्गो दीपनीजातिमान् ॥ -२८५, २८५- ॥ इति स्वराङ्कप्रबन्धः ॥

(सु०) स्वराङ्कं लक्षयति—पदैरिति । पदैरेकेन तालेनोद्ग्राहः; स्वरैस्तालद्वयेन ध्रुवः; विरुदैस्तालत्रयेणाभोगः; स्वरैः समाप्तिः, स स्वराङ्कः ॥ २८५, २८५- ॥ इति स्वराङ्कप्रबन्धः ॥

(क०) अथ श्रीवर्धनं लक्षयति—**श्रीवर्धन** इत्यादि । अत्र बिरुदपाटाभ्यामुद्ग्राहः; पदस्वराभ्यां ध्रुवः; सुगममन्यत् । हर्षवर्धनलक्षणं स्पष्टार्थम् । इति श्रीवर्धनहर्षवर्धनप्रबन्धौ ॥ २८६, २८७ ॥

(सु०) श्रीवर्धनं लक्षयति—**श्रीवर्धन** इति । बिरुदादिभिर्विरचितः श्रीवर्धनः । तस्य तालावृत्तिद्वयेन न्यासः । हर्षवर्धनं लक्षयति—**पदै**रिति । पदबिरुदमात्रैर्विरचितो हर्षवर्धनः ॥ इति श्रीवर्धनहर्षवर्धनप्रबन्धौ ॥-२८६,२८७॥

(क०) अथ वदनं लक्षयति—**छपद्वयमि**त्यादि । छपयोश्छगणपगणयोर्द्वयम्, दो दगणश्च, वदनस्य पादे त्रयो मात्रागणा भवन्ति । अयमेवोद्ग्राहः । **स्वरपाटयुतान्तर**मिति । तादृगेव द्वितीयः पादः स्वरपाट-

[1] छगणाच्चदतैर्युतम् इति सुधाकरपाठः ।

तथैव वस्तुवदनं छयुगाद्दचतैः[1] कृतम् ।
रागो हिन्दोलकस्तालश्चर्चरी बहवो ऽङ्घ्रयः ॥ २८९ ॥
यस्यां षोडशमात्राः स्युर्द्वौ द्वौ च प्राससंयुतौ ।
सा वसन्तोत्सवे गेया चर्चरी प्राकृतैः पदैः ॥ २९० ॥

युतः सन्नन्तर इति व्यपदिश्यते । अत्र युतशब्देन छपद्वयं द इत्येतदन्तरेऽपि कर्तव्यमिति गम्यते । अन्यथा स्वरपाटकृतान्तरमित्येव ब्रूयात् । अत्रान्तरशब्देन ध्रुव उच्यते । उद्ग्राहाभोगयोर्मध्ये भवत्वात् । न तु ध्रुवाभोगान्तरजातो धातुः । तथा सति ह्यत्र पार्थक्येन ध्रुवेण भवितव्यं तदभावादिति भावः । स्वरपाटे युतोऽन्तरो यस्मिन्निति वदनविशेषणम् । सुगममन्यत् । अत्र पदान्तैराभोगः कर्तव्यः; तेनायं त्रिधातुः; छन्दस्तालाद्यनियमादनिर्युक्तः; विरुदतेनकहीनत्वाच्चतुरङ्गो दीपनीजातिमान् ॥ २८८- ॥ इति वदनप्रबन्धः ॥

(सु०) वदनं लक्षयति—छपद्वयमिति । छगणः पूर्वं ततश्च पद्वयं ततोऽनन्तरं दो दगणः; एतैः स्वरैः पाटैर्युक्तमन्तरं मध्यप्रदेशो यस्य तद्वदनम्; तदेव छगणचगणदगणतगणैर्युतमुपवदनम्; तथैव स्वरपाटविरचितं छगणद्वयेन दगणचगणतगणैः कृतं चेद्वस्तुवदनमित्युच्यते । षण्मात्रो गणश्छगणः, चतुर्मात्रश्चः, त्रिमात्रस्तः, द्विमात्रो द इति पूर्वोक्तमनुसंधेयम्; इति त्रिविधं वदनम् ॥ २८८- ॥ इति वदनप्रबन्धः ॥

(क०) अथ चर्चरीं लक्षयति—राग इत्यादि । चर्चरी ताल इति; 'विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चर्चरी' इति तस्य लक्षणं वक्ष्यते । यस्यां चर्चर्यां षोडशमात्रा बहवोऽङ्घ्रयः स्युः । तत्र द्वौ द्वौ

[1] ०द्चतैः इति सुधाकरपाठः ।

**चर्चरीच्छन्दसेत्यन्ये क्रीडातालेन वेत्यपि ।**
**घत्तादिच्छन्दसा वास्य छन्दोलक्ष्मोदिता भिदाः ॥ २९१ ॥**
**पद्धडीप्रभृतिच्छन्दाः पादान्तप्रासशोभिताः ।**
**अध्यात्मगोचरा चर्या स्याद्द्वितीयादितालतः ॥ २९२ ॥**

पादौ प्रासयुतौ भवतः । **चर्चरीच्छन्दसेति** । षोडशमात्रात्मकपादयुक्तं चर्चरीच्छन्दोऽवगन्तव्यम् । **क्रीडातालेन वेति** । 'क्रीडाद्रुतौ विरामान्तौ' इति तस्य लक्षणं वक्ष्यते । **घत्तादिच्छन्दसा वेति** । यदा क्रीडातालेन प्रयुज्यते, तदा घत्तादिच्छन्दः प्रयोक्तव्यमित्यर्थः । तत्रादिशब्देन यत्क्रीडातालप्रयोज्यं तच्छन्दो गृह्यते । घत्ताच्छन्दोऽपि तादृशमवगन्तव्यम् । **छन्दोलक्ष्मोदिता भिदा** इति । इयमेव चर्चरी यदा छन्दोऽन्तरेण गीयते, तदा छन्दःशास्त्रोक्तं तत्तच्छन्दोनाम्ना व्यपदिश्यत इत्यर्थः । अत्र पूर्वार्धमुद्ग्राहः; उत्तरार्धं ध्रुवः; पृथक्पादैराभोगः; अतोऽयं त्रिधातुः; छन्दस्तालनियमाभ्रिर्युक्तः; पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥-२८९–२९१ ॥इति चर्चरीप्रबन्धः ॥

(सु०) चर्चरीं लक्षयति—राग इति । पूर्वोक्तो हिन्दोलो रागः; 'विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चर्चरी' इति वक्ष्यमाणश्चर्चरीतालः; षोडश मात्राः, बहवः पादाः; तेषु द्वौ द्वौ पादावनुप्राससंयुक्तौ सा चर्चरी । प्राकृतैः देशभाषोपनिबद्धैः पदैः कृता; वसन्तोत्सवे गेया । मतान्तमाह—**चर्चरीति** । चर्चरीनाम्ना छन्दसा गेयेयमिति केचिदाहुः । केचित्तु क्रीडातालेन गेयेत्याहुः । घत्तावल्यादिच्छन्दसा छन्दोलक्षण उदिता अभिधा यस्याः, येन छन्दसा गीयते तन्नामवती भवतीत्यर्थः ॥ -२८९–२९१ ॥ इति चर्चरीप्रबन्धः ॥

(क०) अथ चर्यां लक्षयति—**पद्धडीत्यादिना** । **पद्धडीप्रभृतिच्छन्दा इति** । पद्धडीप्रभृतीनि छन्दांसि यस्याः सा । पद्धडीप्रभृतिषु छन्दःस्वेकेन बद्धेत्यर्थः । पद्धडीछन्दोलक्षणमनन्तरमेव वक्ष्यते । **अध्यात्म-**

सा द्विधा छन्दसः पूर्त्या पूर्णापूर्णा त्वपूर्तितः ।
समध्रुवा च विषमध्रुवेत्येषा पुनर्द्विधा ॥ २९३ ॥
आवृत्त्या सर्वपादानां गीयते सा ध्रुवस्य वा ।
[1]चरणान्तसमप्रासा पद्धडीच्छन्दसा युता ॥ २९४ ॥

**गोचरेति** । अध्यात्मं विषयीकृत्य प्रवृत्तेत्यर्थः । **द्वितीयादितालत** इति । 'दौ लो द्वितीयकः' इति द्वितीयतालस्य लक्षणं वक्ष्यते । आदिशब्देन तत्सममात्रो ऽन्यो ऽपि तालो गृह्यते । **समध्रुवेति** । समो ध्रुवो यस्या इति बहुव्रीहिः । समशब्दस्य सापेक्षत्वादत्र प्रत्यासत्त्योद्ग्राह एवापेक्ष्यते । तेन ध्रुवस्योद्ग्राहसमत्वमवगम्यते । एवं विषमध्रुवेत्यत्रापि ध्रुवस्योद्ग्राहापेक्षया न्यूनत्वेन वाधिकत्वेन वा विषमत्वं द्रष्टव्यम् । आभोगः पृथक्पदैः कर्तव्यः; तेनायं त्रिधातुः; छन्दस्तालनियमान्नियुक्तः; पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ २९१–२९३- ॥

(सु०) चर्यां लक्षयति—पद्धडीति । पद्धडीति राहडीमुख्यानि छन्दांसि । यस्यां पादानामन्ते ऽनुप्रासयुक्तः, अध्यात्मवाचकैः पदैरुपनिबद्धा सा चर्या । द्वितीयादितालैः सा कर्तव्या । तृतीयाबहुवचनार्थे तल्प्रत्ययः । सा द्विप्रकारा—छन्दःपूर्तौ पूर्णः, अपूर्तावपूर्णः । पुनरपि द्विधा; सर्वेषां पादानामावृत्तौ समध्रुवा, ध्रुवस्यैवावृत्तौ विषमध्रुवेति ॥ २९२–२९३- ॥ इति चर्याप्रबन्धः ॥

(क०) अथ पद्धडीं लक्षयति—**चरणान्तेत्यादि** । चरणान्तेषु पादान्तेषु सम एकरूपः प्रासो वर्णावृत्तिर्यस्याः सा । **पद्धडीच्छन्दसेति** ।

"षोडश मात्राः पादे पादे यत्र भवन्ति निरस्तविवादे ।
पद्धडिका जगणेन विमुक्ता चरमगुरुः सा सद्भिरिहोक्ता ॥" इति ।

[1] युग्मपादान्तगप्रासा इति सुधाकरपाठः ।

**बिरुदैः स्वरपाटान्तै रचिता पद्धडी मता ।**
**यत्र वीररसेन स्यात्सङ्ग्रामरचितस्तुतिः ॥ २९५ ॥**
**बहुभिश्चरणैः सात्र राहडी परिकीर्तिता ।**
**पदैश्च बिरुदैर्बद्धा वीरश्रीरिति गीयते ॥ २९६ ॥**

तस्य लक्षणमुदाहरणं च । तेन छन्दसा युक्ता । **स्वरपाटान्तैर्बिरुदै रचितेति** । प्रथमार्धं बिरुदै रचयित्वा स्वरान्प्रयुञ्जीत । द्वितीयार्धमपि बिरुदै रचयित्वा पाटान्प्रयुञ्जीतेत्यर्थः । अत्र सस्वरं प्रथमार्धमुद्ग्राहः ; सपाटं द्वितीयार्धं ध्रुवः ; पदैराभोगः कल्पनीयः ; तेनायं त्रिधातुः ; छन्दोनियमान्निर्युक्तः ; तेनकाभावात्पञ्चाङ्ग आनन्दिनीजातिमान् ॥ २९४- ॥ इति पद्धडीप्रबन्धः ॥

(सु०) पद्धडीं लक्षयति—युग्मेति । युग्मयोः द्वितीयचतुर्थयोः पादयोरन्ते अनुप्रासयुता पद्धडीच्छन्दसा पाटान्तैः स्वरसहितैर्बिरुदैश्च कृता पद्धडी ॥२९४-॥ इति पद्धडीप्रबन्धः ॥

(क०) अथ राहडीं लक्षयति—**यत्रेति** । सङ्ग्रामरचितस्तुतिरिति वीररसेत्यस्य स्पष्टीकरणम् । तत्र बहुषु चरणेषु केचनोद्ग्राहाः ; केचन ध्रुवाः कर्तव्याः ; पृथगाभोगः कल्पनीयः ; तेनायं त्रिधातुः ; तालाद्यनियमादनिर्युक्तः ; पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ २९५- ॥ इति राहडीप्रबन्धः ॥

(सु०) राहडीं लक्षयति—यत्रेति । बहुभिः पदैः सङ्ग्रामो वर्ण्यते यस्यां सा राहडी ॥ २९५- ॥ इति राहडीप्रबन्धः ॥

(क०) अथ वीरश्रियं लक्षयति—**पदैरित्यादि** । पदैरुद्ग्राहः ; बिरुदैर्ध्रुवः ; आभोगः पृथक्कर्तव्यः ; तेनायं त्रिधातुः ; तालाद्यनियमाद-

यस्तु गद्येन पद्येन गद्यपद्येन वा कृतः ।
कैशिक्या मङ्गलाचारः सनिःसारुः स्वरान्वितः ॥ २९७ ॥
त्रिविधो धवलः कीर्तिर्विजयो विक्रमस्तथा ।
चतुर्भिश्चरणैः षड्भिरष्टभिश्च क्रमादसौ ॥ २९८ ॥

निर्युक्तः; पदतालबिरुदबद्धत्वात्त्यङ्गो भावनीजातिमान् ॥ २९६ ॥ इति वीरश्रीप्रबन्धः ॥

(सु०) वीरश्रियं लक्षयति—**पदैरिति**। पदैर्बिरुदैश्च निबद्धा वीरश्रीः॥२९६॥ इति वीरश्रीप्रबन्धः ॥

(क०) अथ मङ्गलाचारं लक्षयति—**यस्त्वित्यादि**। गद्यपद्येनेति द्वंद्वैकवद्भावः। **कैशिक्येति**। कैशिकीनाम शुद्धपञ्चमस्य भाषारागः, तया गातव्यः। **सनिःसारुरिति**। निःसारुतालेन सहितः। '. . . विरामान्तौ लघू निःसारुको मतः' इति तस्य लक्षणं वक्ष्यते। **स्वरान्वित इति**। पदान्ते ऽर्धान्ते वा स्वरैरन्वितः कर्तव्यः। अत्र सस्वरं प्रथमार्धमुद्ग्राहः; सस्वरं द्वितीयार्धं ध्रुवः; आभोगः पृथक्कर्तव्यः; तेनायं त्रिधातुः; तालादिनियमान्निर्युक्तः; पदस्वरतालबद्धत्वात्त्यङ्गो भावनीजातिमान् ॥ २९७ ॥ इति मङ्गलाचारप्रबन्धः ॥

(सु०) मङ्गलाचारं लक्षयति—**यस्त्विति**। कैशिकीरागेण निःसारुतालेन स्वरसहितो यो गीयते स मङ्गलाचारः, स त्रिविधः; गद्यजः, पद्यजः, गद्यपद्यजश्चेति ॥ २९७ ॥ इति मङ्गलाचारप्रबन्धः ॥

(क०) अथ धवलं लक्षयति—**त्रिविध** इत्यादि। **चतुर्भिश्चरणै** रचितः कीर्तिधवलः, षड्भी रचितो विजयधवलः, अष्टभी रचितो विक्रम-

विषमे तु च्छयुग्मं चेत्तो वा दो वाधिकः समे ।
तदा स्यात्कीर्तिधवलो विजये त्वाद्यतुर्ययोः ॥ २९९ ॥
दौ द्वौ षष्ठे द्वितीये च शेषौ द्वौ छेन पेन वा ।
प्रथमे चत्रयं दः स्यात्तृतीये दास्त्रयस्तु च ॥ ३०० ॥
तुर्यद्वितीययोश्चैतत्पञ्चमे सप्तमे तथा ।
षष्ठेऽष्टमे दाश्चत्वारो यस्यासौ विक्रमो मतः ॥ ३०१ ॥
आशीर्भिर्धवलो गेयो धवलादिपदान्वितः ।
यदृच्छया वा धवलो गेयो लोकप्रसिद्धितः ॥ ३०२ ॥

धवल इति क्रमो द्रष्टव्यः । **विषम** इति । विषमे पादे छ्युग्मं छगणयोः षण्मात्रिकयोर्युग्मं स्यादिति ; विषमपादे द्वादश मात्राः कर्तव्या इत्यर्थः । समे समपादे । **तो वा दो वाधिक** इति । छ्युग्मकात्परं तगणस्त्रिमात्रिकः, दगणो द्विमात्रिको वाधिको भवति । समपादे पञ्चदश वा चतुर्दश मात्राः कर्तव्या इत्यर्थः । **विजये त्विति** । षट्पादयुक्ते विजयधवले त्वादितुर्ययोः पादयोस्तथा षष्ठे द्वितीये च पादे दौ द्वौ दगणौ ; शेषौ तृतीयपञ्चमौ द्वौ पादौ छेन छगणेन पेन पगणेन वाधिकौ भवतः । कीर्तिधवलपादापेक्षयाधिकौ भवत इत्यर्थः । विक्रमधवलस्य लक्षणमाह—**प्रथम** इति । प्रथमे पादे चाश्चगणास्त्रयः । दो दगणोऽपि स्यात् । तृतीयपादे दास्त्रयः । **तुर्यद्वितीययोश्चैतदिति** । चतुर्थे चास्त्रयो दश्च, द्वितीये दास्त्रयस्तु चेत्यर्थः । **पञ्चमे सप्तमे तथेति** । पञ्चमे तुर्योक्तं सप्तमे द्वितीयोक्तं च द्रष्टव्यम् । षष्ठेऽष्टमे दाश्चत्वारो भवन्ति । आशीर्भिराशीर्वादैः । **धवलादिपदान्वित** इति । आदिशब्देन विमलादीनि गृह्यन्ते । **यदृच्छयेति** । उक्तगणादिनियमराहित्येन । **लोकप्रसिद्धित** इति । वर्तमानलक्ष्यानुसारेणेत्यर्थः । त्रिष्वपि धवलभेदेषु पूर्वार्धमुद्ग्राहः ; उत्तरार्धं ध्रुवः ; आभोगः पृथक्कर्तव्यः ; तेनायं

**कैशिक्यां बोट्टरागे वा मङ्गलं मङ्गलैः पदैः ।**
**विलम्बितलये गेयं मङ्गलच्छन्दसाथवा ॥ ३०३ ॥**

त्रिधातुः; तालाद्यनियमादनिर्युक्तः; पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ २९८–३०२ ॥ इति धवलप्रबन्धः ॥

(सु०) धवलं लक्षयति—त्रिविध इति । धवलस्त्रिविधः; चतुर्भिश्चरणैरुपनिबद्धः कीर्तिः; षड्भिश्चरणैर्विजयः, अष्टभिश्चरणैर्विक्रम इति । एतेषु मात्रानियममाह—विषम इति । विषमे प्रथमे तृतीये च चरणे छगणः छगणद्वयम्; समे द्वितीये चतुर्थे च चरणे तगणः, दगणो वाधिकः; तदा कीर्तिधवलः । प्रथमचतुर्थयोः षष्ठे द्वितीये च चरणे द्वौ दगणौस्तः; शेषौ तृतीयपञ्चमौ छगणेन पगणेन वाधिकौ; तदा विजयधवलः । प्रथमे चगणत्रयम्; दो दगणः; तृतीये दगणत्रयम; चतुर्थद्वितीययोश्चैतदेव, पञ्चमे चगणत्रयं दगणश्च; सप्तमे दगणत्रयम्; षष्ठाष्टमयोर्दगणाश्चत्वारस्तदा विक्रमधवल इति । स च धवलो धवलादिपादैराशीर्वादैर्गेयः । यदृच्छया वेति—यदृच्छया वा लोकप्रसिद्धितो वा गेयः ॥ १९८-३०२ ॥ इति धवलप्रबन्धः ॥

(क०) अथ मङ्गलं लक्षयति—**कैशिक्यामित्यादि** । **मङ्गलैः पदैरिति** । शङ्खचक्राब्जकोककैरवादिशंसिभिरित्यर्थः । **मङ्गलच्छन्दसेति** ।

'पञ्च चकारगणाः प्रतिपादगताश्चे-
न्मङ्गलमाहुरिदं सुधियः खलु वृत्तम्' ॥

इति तस्य लक्षणमुदाहरणं च । अत्रोद्ग्राहादिकल्पनादिकं पूर्ववत् ॥३०३॥ इति मङ्गलप्रबन्धः ॥

(सु०) मङ्गलं लक्षयति—कैशिक्यामिति । कैशिकीरागे बोट्टरागे वा कल्याणवाचिकैः पदैर्विलम्बितेन लयेन मङ्गलो गेयः । अथ वा मङ्गलनाम्ना छन्दसा ॥ ३०३ ॥ इति मङ्गलप्रबन्धः ॥

खण्डत्रयं प्रासयुतं गीयते देशभाषया ।
ओवीपदं तदन्ते चेदोवी तज्ज्ञैस्तदोदिता ॥ ३०४ ॥
त्रयाणां चरणानां स्युरेकाद्यावृत्तिदो भिदाः ।
आदिमध्यान्तगैः प्रासैरेकाद्यैश्च पदे पदे ॥ ३०५ ॥
छन्दोभिर्बहुभिर्गेया ओव्यो जनमनोहराः ।
सानुप्रासैस्त्रिभिः खण्डैर्मण्डिता प्राकृतैः पदैः ॥ ३०६ ॥
प्रान्ते लोलीपदोपेता लोली गेया विचक्षणैः ।
दोहदः स्याद्यदा प्रान्ते प्रोल्लसड्ढोल्लरीपदाः ॥ ३०७ ॥
ढोल्लरी नाम सा प्रोक्ता लाटभाषाविभूषिता ।
अनुप्रासप्रधानं चेत्खण्डत्रयसमन्वितम् ॥ ३०८ ॥
दन्तीपदान्वितं प्रान्ते तदा दन्ती निगद्यते ।
अनुक्ताभोगवस्तूनां पदैराभोगकल्पना ॥ ३०९ ॥
ओव्यादयस्तु चत्वारो भवन्त्याभोगवर्जिताः ।

(क०) ओव्यादीनां चतुर्णां लक्षणानि स्फुटार्थानि । मेलापकाभोगवर्जितत्वाच्चत्वारोऽपि द्विधातवः । तत्राद्यं खण्डद्वयमुद्ग्राहः; तृतीयं खण्डं ध्रुवः; तालाद्यनियमाच्चत्वारोऽप्यनिर्युक्ताः; पदतालबद्धत्वाद्द्व्यङ्गास्तारावलीजातिमन्तः ॥ ३०४–३०९- ॥ इत्योव्यादयः प्रबन्धाः ॥ इति षट्त्रिंशद्विप्रकीर्णाः प्रबन्धाः ॥

(सु०) ओवीं लक्षयति—खण्डत्रयमिति । देशभाषया सानुप्रासेन च खण्डत्रयोपेतमन्ते ओवीति पदं गीयते चेत्तदा ओवी । एतस्याश्चरणावृत्तिभेदेन पदे पदे आदौ मध्य अन्ते चानुप्रासभेदैश्च बहवो भेदा भवन्ति । एताश्च बहुभिश्छन्दोभिर्गेयाः । लोलीं लक्षयति—सानुप्रासैरिति । ओवीलक्षणे ओवीपदस्थाने लोलीपदं प्रयुज्यते चेत्तदा लोली । ढोल्लरीं लक्षयति—दोहद इति । पूर्वलक्षिते दोहदे प्रान्ते ढोल्लरीपदं गीयते चेत्तदा ढोल्लरी; सा लाटभाषया गेया । दन्तीं

शुद्धश्छायालगश्चेति द्विविधः सूड उच्यते ॥ ३१० ॥
एलादिः शुद्ध इत्युक्तो ध्रुवादिः सालगो मतः ।
छायालगत्वमेलादेर्यद्यथाचार्यसंमतम् ॥ ३११ ॥
लोके तथापि शुद्धोऽसौ शुद्धसादृश्यतो मतः ।
जात्याद्यन्तरभाषान्तं [1]शुद्धं प्रकरणान्वितम् ॥ ३१२ ॥
तत्रोक्तः शुद्धसूडः प्राक्सालगस्त्वधुनोच्यते ।

लक्षयति—अनुप्रासेति । सानुप्रासं खण्डत्रयस्य प्रान्ते दन्त्यपदप्रक्षेपे दन्ती । साधारणं लक्षणमाह—अनुक्तेति । येषु प्रबन्धेष्वाभोगो नोक्तः ; तत्र पदैराभोगो ज्ञातव्यः । ओव्यादिषु चतुर्षु प्रबन्धेषु नास्त्याभोगः ॥ ३०४–३०९– ॥ इत्योव्यादयः प्रबन्धाः ॥ इति षट्त्रिंशद्विप्रकीर्णाः प्रबन्धाः ॥

(क०) अथाध्यायादावुद्दिष्टं सालगसूडं लक्षयितुं संगतिं दर्शयति—**शुद्ध** इत्यादि । शुद्धः शास्त्रोक्तनियमेन प्रकीर्तितः । छायालगश्छायां शुद्धसादृश्यं लगति गच्छतीति तथोक्तः । **एलादिरिति** । एलामारभ्यैकताली-पर्यन्तमष्टभिर्गीतैः शुद्धसूड इत्युक्तः । **ध्रुवादिरिति** । वक्ष्यमाणं ध्रुवमारभ्य वक्ष्यमाणैकतालीपर्यन्तं सप्तभिर्गीतैः सालगसूडोऽभिमतः । सालग इति च्छायालगशब्दस्यापभ्रंशोऽपि लोकप्रसिद्धया प्रयुक्त इति वेदितव्यः । ननु जात्यादेरेव शुद्धत्वम् ; एलादेस्तु तच्छायानुकारित्वात्सालगत्वमेव । तत्कथमेलादिः शुद्ध इत्युक्तमित्यत आह—**छायालगत्वमेलादेरित्यादि** । **शुद्धसादृश्यत** इति । शुद्धस्य जात्यादेः सादृश्यतो नियमानतिलङ्घ-नादित्यर्थः । अतः शुद्धत्वमौपचारिकमेलादेः । ध्रुवादेस्तु नियमातिलङ्घ-नात्सर्वथा सालगत्वमेवेति भावः । **जात्यान्तरभाषान्तमिति** । जाति-कपालकम्बलगीतिग्रामरागोपरागभाषाविभाषान्तरभाषापर्यन्तमित्यर्थः । **प्रकर-**

[1] श्रुतिप्रकरणान्वितम् इति सुधाकरपाठः ।

**आद्यो ध्रुवस्ततो मण्ठप्रतिमण्ठनिसारुकाः ॥ ३१३ ॥**
**अड्डतालस्ततो रास एकतालीत्यसौ मतः ।**

**णान्वितमिति । तालाध्याये** वक्ष्यमाणानि मन्द्रकादिचतुर्दश गीतानि प्रकरणानीत्युच्यन्ते । तान्यपि नियमाननुलङ्घनेनैव प्रवर्तितत्वाच्छुद्धे ऽन्तर्भूतानीत्यर्थः ॥ -३१०–३१२- ॥

(सु०) सालगसूडं लक्षयितुमाह—**शुद्ध** इति । सूडो द्विविधः; शुद्धः, छायालगश्चेति । तत्रैलादिः शुद्धः ; ध्रुवादिः सालगः ; सालगछायालगौ पर्यायौ । ननु भरतेनैलादीनां छायालगत्वमुक्तम् । तत्कथं शुद्धत्वमुच्यते तत्राह—**छायालगत्वमिति** । शुद्धसादृश्येनैव शुद्धत्वम् ; न तु मुख्यत्वं शुद्धत्वमित्यर्थः । किं तच्छुद्धम् ? यत्सादृश्यमेलादेस्तत्राह—**श्रुतीति** । श्रुतिप्रकरणमारभ्यान्तरभाषापर्यन्तं यदुक्तं तत्प्रकरणमिव तालाध्याये वक्ष्यमाणानि चतुर्दशगीतानि, एतावच्छुद्धम् । अनेन सह एलादेः सादृश्यमनियतत्वं सम्यक्प्रयोगे फलम् ; असम्यक्प्रयोगे दोष इत्यादि ज्ञातव्यम् ॥ -३१०–३१२- ॥

(क०) सालगसूडस्थानि गीतान्युद्दिशति—**आद्यो ध्रुव** इत्यादि । असाविति सालगसूडः । मतः संमतः । सभेदानां ध्रुवादीनां लक्षणानि स्पष्टार्थानि । ननु, 'मण्ठवत्प्रतिमण्ठादेर्लक्ष्मोद्ग्राहादिकं मतम्' इति वचनेन प्रतिमण्ठादिषूद्ग्राहाद्यवयवसंनिवेशस्य मण्ठवदित्यतिदेशान्मण्ठात्प्रतिमण्ठादीनामवयवसंनिवेशकृतो भेदो नास्त्येव ; 'तथाऽप्येषां विशेषस्तु प्रत्येकं प्रतिपाद्यते' इति प्रतिज्ञाय, 'तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकम्' इत्यादिभिर्वचनैस्तालानामेवात्र भेदकत्वेनोपादानात्केवलानां रसानामत्र भेदकत्वं न विवक्षितमेव । एवं स्थिते सति मण्ठभेदस्य कलापस्य तालः ; 'कलापो नगणेन तु ; विरामान्तेन' इत्युक्तः । तथा प्रतिमण्ठभेदस्य विचारस्यापि तालः ; 'लघुत्रयाद्विरामान्ताद्विचारः' इत्युक्तः । अत एव तयोर्लक्षणयोः शब्दभेद एव, न

त्वर्थभेदः। तेन मण्ठप्रतिमण्ठयोस्तालयोरत्रार्थपौनरुक्त्यं दोष इति चेत्; सत्यम्। अत्यल्पमिदमुच्यते—द्वयोस्तालयोः पौनरुक्त्यं दोष इति। किंतूत्तरस्मिन्नध्याये विंशत्यधिकशतेषु देशीतालेषु लक्षितेषु तत्र सालगसूडाश्रयैः कैश्चिदन्यैस्तालैः सह केषांचिद्बहूनां तालानां द्वयोर्द्वयोस्त्रयाणां त्रयाणां च मिथः पौनरुक्त्यं लक्षणतः प्रतीतं भविष्यति। तस्य तत्रैव परिहारं वक्ष्याम इत्यत्र पृथङ्नोच्यते। ननु जयन्तादिषु षोडशसु ध्रुवेषु योऽक्षरसंख्यानियम उक्तः, स वर्तमानेषु केषुचिद्ध्रुवेषु न दृश्यते। तत्कथं तेषां लक्षणहीनत्वेऽपि लोके परिग्रह इति चेत्; सत्यमेतत्। अत्राक्षरशब्देन पदान्यप्युच्यन्ते। यथायमक्षरार्थ इति पदार्थो वर्ण्यते। तेन क्वचित्पदानां वा संख्याया नियमो द्रष्टव्यः। यत्र सोऽपि नास्ति, तत्राक्षरादेः संख्यानियमाभावान्नियमोक्तादृष्टफलस्याभाव एव, न तु दृष्टफलस्य जनरंजनादेरपि। तेन तेषां लोकपरिग्रहोऽप्युपपन्न एव। अनियताक्षररसतालयुक्तस्योद्ग्राहाद्यवयवसंनिवेशस्याविशिष्टत्वेन तेषामपि लक्षणत्वाद्ध्रुवव्यवहारो न हीयत एव। मण्ठादीनां च रसतालादिनियमाभावोऽप्येवं द्रष्टव्यः। एते ध्रुवादयः सप्तापि मेलापकाभावात्त्रिधातवः। मण्ठादयस्तु षडपि, 'ततो वैकल्पिकोऽन्तरः' इति वचनेन सान्तरत्वपक्षे तेनान्तरेण सह चतुर्धातवः। अनन्तरत्वपक्षे तु त्रिधातव एव। अयमन्तरो लौकिकैरुपान्तर इत्युच्यते। तथा तैर्ध्रुवः खण्डस्यान्तरव्यपदेशः कृत इति मन्तव्यम्। क्वचिद्ध्रुवखण्डस्यान्तरव्यपदेशो ग्रन्थकारेणापि कृतः। यथात्रैकतालीलक्षणे 'सकृद्गियतिरुद्ग्राहो ऽन्तरस्त्वक्षरनिर्मितः' इत्यत्रोद्ग्राहानन्तरमन्तरग्रहणादन्तरशब्देन ध्रुवखण्ड एवोच्यत इति गम्यते। अत्रान्तरस्त्वित्यत्र तुशब्देनोद्ग्राहस्यालापरचितत्वमवगन्तव्यम्। एवम्, 'आलापरचितो ऽन्तरः' इत्यत्रापि ध्रुव एवान्तरशब्दवाच्यः। एते ध्रुवादयस्तालादिनियमान्नियुक्ताः, पदतालबद्धत्वाद्द्व्यङ्गास्तारावलीजातिमन्तः ॥-३२३—३६०॥ इति ध्रुवादयः प्रबन्धाः॥ इति सालगसूडप्रबन्धाः॥

एकधातुर्द्विखण्डः स्याद्यत्रोद्ग्राहस्ततः परम् ॥ ३१४ ॥
किंचिदुच्चं भवेत्खण्डं द्विरभ्यस्तमिदं त्रयम् ।
ततो द्विखण्ड आभोगस्तस्य स्यात्खण्डमादिमम् ॥ ३१५ ॥
एकधातु द्विखण्डं च खण्डमुच्चतरं परम् ।
स्तुत्यनामाङ्कितश्चासौ क्वचिदुच्चैकखण्डकः ॥ ३१६ ॥
उद्ग्राहस्याद्यखण्डे च न्यासः सध्रुवको भवेत् ।
एकादशाक्षरात्खण्डादेकैकाक्षरवर्धितैः ॥ ३१७ ॥
खण्डे ध्रुवाः षोडश स्युः षड्विंशत्यक्षरावधि ।
जयन्तशेखरोत्साहास्ततो मधुरनिर्मलौ ॥ ३१८ ॥
कुन्तलः कामलश्चारो नन्दनश्चन्द्रशेखरः ।
कामोदो विजयाख्यश्च कंदर्पजयमङ्गलौ ॥ ३१९ ॥
तिलको ललितश्चेति संज्ञाश्चैषां क्रमादिमाः ।
आदितालेन शृङ्गारे जयन्तो गीयते बुधैः ॥ ३२० ॥

(सु०) सालसूडप्रबन्धान्विभजते—आद्यो ध्रुव इति । ध्रुवादिभिः सप्तभिर्गीतैः सालगसूडप्रबन्धाः । तेषु ध्रुवं लक्षयति—एकधात्विति । पूर्वं सदृशगेयखण्डद्वययुक्त उद्ग्राहः कर्तव्यः । ततोऽनन्तरं किंचिदुच्चं खण्डमन्तराख्यं कर्तव्यम्; एतत्त्रयमपि द्विरभ्यस्तं द्विर्गेयम् । ततोऽनन्तरं खण्डद्वययुक्त आभोगः, तस्य प्रथमं खण्डद्वयमेकधातु सदृशगेयखण्डद्वययुक्तम, द्वितीयखण्डं ततोऽप्युच्चं गातव्यम् । असावाभोगस्तुत्यस्य नायकस्य नाम्ना युक्तः कार्यः । क्वचित्केषांचिन्मतेऽयमुच्चैकखण्डो गातव्यः । उद्ग्राहस्य आद्यखण्डे च समाप्तिः, स ध्रुव इति ज्ञेयः । तस्य भेदानाह—एकादशेति । एकादशाक्षरखण्डादारभ्य षड्विंशत्यक्षरखण्डपर्यन्तमेकैकाक्षरवृद्ध्या जयन्तादयो ललितान्ता षोडश ध्रुवा भवन्ति । तेषां क्रमेण लक्षणमाह—आदितालेनेति । आदितालेन एकादशाक्षरखण्डो जयन्तः; निःसरुतालेन द्वादशाक्षरखण्डः शेखरः; प्रतिमण्ठतालेन

स नेतृश्रोतृगातॄणामायुःश्रीवर्धनो मतः ।
ऋद्धिसौभाग्यदो वीरे निःसारौ शेखरो भवेत् ॥ ३२१ ॥
प्रतिमण्ठेन हास्ये स्यादुत्साहो वंशवृद्धिकृत् ।
मधुरो भोगदो गेयः करुणे हयलीलया ॥ ३२२ ॥
क्रीडातालेन शृङ्गारे निर्मलस्तनुते प्रभाम् ।
लघुशेखरतालेन कुन्तलोऽभीष्टदो ऽद्भुते ॥ ३२३ ॥
कामलो विप्रलम्भे स्याज्झम्पातालेन सिद्धिदः ।
हर्षोत्कर्षप्रदश्चारो वीरे निःसारुतालतः ॥ ३२४ ॥
नन्दनो वीरशृङ्गार एकताल्येष्टसिद्धिदः ।
वीरे हास्ये च शृङ्गारे प्रतिमण्ठेन गीयते ॥ ३२५ ॥
अभीष्टफलदः श्रोतृगातॄणां चन्द्रशेखरः ।
प्रतिमण्ठेन शृङ्गारे कामोदोऽभीष्टकामदः ॥ ३२६ ॥
हास्ये द्वितीयतालेन विजयो नेतुरायुषे ।
हास्यशृङ्गारकरुणेष्वादितालेन गीयते ॥ ३२७ ॥
कंदर्पो भोगदो नृणां श्रीसदाशिवसंमतः ।
क्रीडातालेन शृङ्गारे वीरे च जयमङ्गलः ॥ ३२८ ॥
जयोत्साहप्रदः पुंसां ध्रुवकस्तिलकाभिधः ।

त्रयोदशाक्षरखण्ड उत्साहः; हयलीलातालेन चतुर्दशाक्षरखण्डो मधुरः; क्रीडातालेन पञ्चदशाक्षरखण्डो निर्मलः; लघुशेखरतालेन षोडशाक्षरखण्डो कुन्तलः; झम्पातालेन सप्तदशाक्षरखण्डो कामलः; निःसारुतालेनाष्टादशाक्षरखण्डो चारः; एकताल्या एकोनविंशत्यक्षरखण्डो नन्दनः; प्रतिमण्ठतालेन विंशत्यक्षरखण्डश्चन्द्रशेखरः; प्रतिमण्ठेन तालेनैकविंशत्यक्षरखण्डः कामोदः; द्वितीयतालेन द्वाविंशत्यक्षरखण्डो विजयः; आदितालेन त्रयोविंशत्यक्षरखण्डः कंदर्पः; क्रीडातालेन चतुर्विंशत्यक्षरखण्डो जयमङ्गलः; एकताल्या पञ्चविंशत्यक्षरखण्ड-

रसे वीरे च शृङ्गार एकताल्या प्रगीयते ॥ ३२९ ॥
प्रतिमण्ठेन शृङ्गारे ललितः सर्वसिद्धये ।
स्याद्वर्णनियमः सर्वखण्डः खण्डद्वये तथा ॥ ३३० ॥
यथोक्तान्यो जयन्तादीन्गायेन्निपुणया धिया ।
सर्वक्रतुफलं तस्येत्यवोचन्मुनिसत्तमः ॥ ३३१ ॥
द्वियत्येकविरामं वा यस्योद्ग्राहाख्यखण्डकम् ।
ततः खण्डं ध्रुवाख्यं द्विस्ततो वैकल्पिकोऽन्तरः ॥ ३३२ ॥
तं गीत्वा ध्रुवमागत्य वाभोगो गीयते सकृत् ।
ध्रुवे न्यासस्ततः प्रोक्तः स मण्ठो मण्ठतालतः ॥ ३३३ ॥
जयप्रियो मङ्गलश्च सुन्दरो वल्लभस्तथा ।
कलापः कमलश्चेति षड्भेदा मण्ठके मताः ॥ ३३४ ॥
षट्प्रकारो मण्ठतालो रूपकं तेन भिद्यते ।
वीरे जयप्रियो गेयो मण्ठेन जगणात्मना ॥ ३३५ ॥
मङ्गलो भेन शृङ्गारे सुन्दरः सेन तद्रसे ।
वल्लभो रेण करुणे कलापो नगणेन तु ॥ ३३६ ॥

स्तिलकः ; प्रतिमण्ठेन तालेन षड्विंशत्यक्षरखण्डो ललित इति । अयं वर्णनियमः कस्मिन्खण्डे कर्तव्य इत्यपेक्षायां पक्षद्वयमाचष्टे—स्यादिति । क्रमेणैतेषां गाने फलमाह—यथोक्तानिति । यथोक्तलक्षणलक्षितान् ॥ ३१३–३३१ ॥ इति ध्रुवलक्षणम् ॥

(सु०) मण्ठलक्षणमाह—द्वियतीति । उद्ग्राहखण्डं यतिद्वयसंयुक्तम्, एकयतिकं वा कर्तव्यम् । ततोऽनन्तरं ध्रुवाख्यं खण्डं द्विर्गेयम् । तत अन्तरो वैकल्पिकः कर्तव्यो वा, न वा कर्तव्यः ; पक्षे तं गीत्वा पुनरपि ध्रुवो गातव्यः । तत आभोगः सकृद्गीयते ; ध्रुवे च परिसमाप्तिः ; एवंविधो मण्ठतालेन यो गीयते स मण्ठः । तस्य भेदानाह—जयप्रिय इति । जयप्रियादयः षड्भेदाः षट्प्रकाराः

विरामान्तेन गातव्यो रसे हास्ये विचक्षणैः ।
विरामान्तद्रुतद्वंद्वाल्लघुना कमलो ऽद्भुते ॥ ३३७ ॥
मण्ठवत्प्रतिमण्ठादेर्लक्ष्मोद्ग्राहादिकं मतम् ।
तथाप्येषां विशेषस्तु प्रत्येकं प्रतिपाद्यते ॥ ३३८ ॥
तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकः ।
चतुर्धा सो ऽमरस्तारो विचारः कुन्द इत्यपि ॥ ३३९ ॥
अमरो गुरुणैकेन शृङ्गारे स विधीयते ।
विरामान्तद्रुतद्वंद्वाल्लघुद्वंद्वेन जायते ॥ ३४० ॥
ताराख्यः प्रतिमण्ठो ऽसौ रसयोर्वीररौद्रयोः ।
लघुत्रयाद्विरामान्ताद्विचारः करुणे भवेत् ॥ ३४१ ॥
कुन्दो विराममध्येन लत्रयेणाद्भुते भवेत् ।
ते शृङ्गारे ऽपि चत्वारो गीयन्ते लक्ष्मवेदिभिः ॥ ३४२ ॥
बद्धो निःसारुतालेन प्रोक्तो निःसारुको बुधैः ।
वैकुन्दानन्दकान्ताराः समरो वाञ्छितस्तथा ॥ ३४३ ॥

इति । तेन रूपकं मण्ठकात्प्रबन्धाद्भिद्यते । एतेषां लक्षणमाह—वीर इत्यादिना । जगणरूपेण मण्ठेन यो गीयमानो जयप्रियः, वीरो रसः । भगणेन मङ्गलः ; शृङ्गारो रसः । सगणेन सुन्दरः । रगणेन वल्लभः । नगणेन विरामान्तेन कलापः ; द्रुतद्वंद्वेन विरामान्तेन ध्रुवानन्तरं लघुना कमल इति ॥३३२–३३७॥ इति मण्ठलक्षणम् ॥

(सु०) प्रतिमण्ठादिसाधारणं किंचिदाह—मण्ठवदिति । प्रतिमण्ठलक्षणमाह—तत्रेति । प्रतिमण्ठेन तालेन गीयमानः प्रतिमण्ठः ; तस्य अमरादयश्चत्वारो भेदाः । तेषां लक्षणमाह—अमर इति । एकेन गुरुणा गीयमानो ऽमरः ; विरामान्तेन ध्रुवानन्तरं लघुद्वयेन गीयमानस्तारः ; विरामान्तेन लघुत्रयेण गीयमानो विचारः ; विराममध्येन लघुत्रयेण गीयमानः कुन्द इति ॥ ३३८–३४२ ॥ इति प्रतिमण्ठलक्षणम् ॥

(सु०) निःसारुकं लक्षयति—बद्ध इति । निःसारुकतालेन विरच्यमानो

विशालश्चेति स प्रोक्तः षड्विधः सूरिशार्ङ्गिणा ।
द्रुतद्वंद्वाल्लघुद्वंद्वाद्वैकुन्दो मङ्गले भवेत् ॥ ३४४ ॥
कुर्यादानन्दमानन्दे विरामान्तद्रुतद्वयात् ।
कान्तारो लगुरुभ्यां स्याद्विप्रलम्भे स गीयते ॥ ३४५ ॥
लघुद्वयाद्विरामान्तात्समरो वीरगोचरः ।
लघुत्रयाद्द्रुतद्वंद्वाद्वाञ्छितो वाञ्छितप्रदः ॥ ३४६ ॥
संभोगे स्याद्विशालाख्यो लाद्द्रुतद्वयतो लघोः ।
अङ्कतालेन तालेनाङ्कतालः परिकीर्तितः ॥ ३४७ ॥
निःशङ्कशङ्कशीलाश्च चारो ऽथ मकरन्दकः ।
विजयश्चेति स प्रोक्तः षोढा सोढलसूनुना ॥ ३४८ ॥
लगुरुभ्यां द्रुतद्वंद्वान्निःशङ्को विस्मये भवेत् ।
लघोर्द्रुतद्वयेन स्याच्छङ्कः शृङ्गारवीरयोः ॥ ३४९ ॥
शान्ते शीलो विरामान्तद्रुतद्वंद्वाल्लघोर्भवेत् ।
द्रुतद्वंद्वाल्लगाभ्यां स्याचारो वीरे ऽद्भुते रसे ॥ ३५० ॥

निःसारुकः । तस्य वैकुन्दादयः षड्भेदाः । तांल्लक्षयति—द्रुतद्वंद्वादिति । द्रुतद्वयलघुद्वयेन रचितो वैकुन्दः; विरामान्तेन द्रुतद्वयेनानन्दः; तल्लोके रूपक-मित्युच्यते । लघुगुरुभ्यां कान्तारः; विरामान्तेन लघुद्वयेन समरः; जम्बुनाल इत्युच्यते लोके । लघुत्रयद्रुतद्वयेन वाञ्छितः; लघुद्रुतद्वयलघुभिर्विशाल इति ॥ ३४३–३४६- ॥ इति निःसारुकलक्षणम् ॥

(सु०) अङ्कतालं लक्षयति—अङ्कतालेनेति । अङ्किताख्येन तालेन गीय-मानोऽङ्कतालः । तस्य निःशङ्कादयः षड्भेदाः । तेषां लक्षणमाह—लगुरुभ्या-मित्यादिना । लघुगुरुभ्यामनन्तरं द्रुतद्वयेन गीयमानो निःशङ्कः; लघ्वनन्तरं द्रुतद्वयेन शङ्कः; विरामान्तेन द्रुतद्वयानन्तरं शीलः; द्रुतद्वयानन्तरं लघुगुरुभ्यां

शृङ्गारे मकरन्दः स्याद्द्रुतद्वंद्वात्परे गुरौ ।
विजयाख्यो रसे वीरे द्रुताभ्यां लघुना भवेत् ॥ ३५१ ॥
रासको रासतालेन स चतुर्धा निरूपितः ।
विनोदो वरदो नन्दः कम्बुजश्चेति शार्ङ्गिणा ॥ ३५२ ॥
आलापान्तध्रुवपदाद्विनोदः कौतुके भवेत् ।
ध्रुवादालापमध्याच्चु वरदो देवतास्तुतौ ॥ ३५३ ॥
खण्डमाद्यं द्विखण्डस्योद्ग्राहस्यालापनिर्मितम् ।
यस्यासौ रासको नन्दो गीयते चाद्भुते रसे ॥ ३५४ ॥
आलापादेर्ध्रुवपदात्कम्बुजः करुणे भवेत् ।
सर्वेषु रासकेष्वेषु द्विखण्डोद्ग्राहकल्पना ॥ ३५५ ॥
एकताली भवेत्तालेनैकताल्या त्रिधा च सा ।
रमा च चन्द्रिका तद्वद्विपुलेत्यथ लक्षणम् ॥ ३५६ ॥
सकृद्विरतिरुद्ग्राहो ऽन्तरस्त्वक्षरनिर्मितः ।

चारः; द्रुतद्वयानन्तरं गुरुणा मकरन्दः; द्रुतद्वयानन्तरं लघुना विजय इति ॥ -३४७–३५१ ॥ इत्यद्भुतालक्षणम् ॥

(सु०) रासकं लक्षयति—रासक इति । रासतालेन गीयमानो रासकः । तस्य विनोदादयश्चत्वारो भेदाः । तेषां लक्षणमाह—आलापान्त इत्यादिना । ध्रुवपदस्यान्ते आलापो विरच्यते चेद्विनोदः; ध्रुवस्य मध्य आलापश्चेत्तदा वरदः; खण्डद्वययुक्तस्योद्ग्राहस्याद्यं खण्डमालापनिर्मितं चेत्तदा नन्दः; ध्रुवस्यादावालापश्चेत्तदा कम्बुज इति । सर्वेष्वपि रासकेषूद्ग्राहो द्विखण्डः कर्तव्यः ॥ ३५२–३५५ ॥ इति रासकलक्षणम् ॥

(सु०) एकतालीं लक्षयति—एकतालीति । एकताली नाम्ना तालेन विरच्यमाना एकताली । सा भेदत्रयवती; रमा, चन्द्रिका, विपुला चेति । तासां लक्षणमाह—सकृदिति । यस्यां द्विखण्ड उद्ग्राहः, अन्तरश्चालापः क्रियते सा

यस्यामसौ रमा सा च गातृश्रोत्रोः श्रिये भवेत् ॥ ३५७ ॥
उद्ग्राहो द्विदलो यस्यामालापरचितोऽन्तरः ।
घनद्रुता घनयतिर्घनानुप्रासयोगिनी ॥ ३५८ ॥
चन्द्रिका सैकताली स्याद्भूरिसौभाग्यदायिनी ।
आलापपूर्वकोद्ग्राहा विपुलानन्ददायिनी ॥ ३५९ ॥
आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
सैव प्रयोगशब्देन शार्ङ्गदेवेन कीर्तिता ॥ ३६० ॥
गुणान्वितं दोषहीनं नवं रूपकमुत्तमम् ।
रागेण धातुमातुभ्यां तथाताललयौडुवैः ॥ ३६१ ॥
नूतनै रूपकं नूत्नं रागः स्थायान्तरैर्नवः ।
धातू रागांशभेदेन मातोस्तु नवता भवेत् ॥ ३६२ ॥

चन्द्रिका; यस्या उद्ग्राहात्पूर्वमालापः क्रियते, सा विपुलेति। अत्राक्षरवर्जिता गमकालप्तिरेवालापः, स एव प्रयोग इत्युच्यते॥३५६—३६०॥ इत्येकतालीलक्षणम्॥

(क०) अथ रूपकस्योत्तमाद्यवान्तरभेदान्दर्शयिष्यन्नादावुत्तमं लक्षयति—**गुणान्वितमित्यादि**। गुणाः व्यक्त्यादयो वक्ष्यमाणा दश गीतगुणाः; तैरन्वितम्। **दोषहीनमिति**। दुष्टादयो वक्ष्यमाणा दश गीतदोषाः; तैर्हीनं यन्नवं रूपकं तदुत्तममित्युच्यते। रूपकस्य नवत्वे निमित्तं दर्शयति—**रागेणे-त्यादिना**। **ताललयौडुवैरिति**। तालश्च लयश्चौडुवं चेति द्वंद्वः। औडुवशब्देनात्र रचनाविशेष उच्यते। नूतनरागादिनिर्मितत्वाद्रूपकं नवं भवतीत्यर्थः। रञ्जनादिधर्मयोगे सिद्धरूपाणां रागादीनां नूतनत्वं कथमित्याकाङ्क्षायामाह—**रागः स्थायान्तरैरित्यादि**। स्थाया रागस्यावयवाः। अन्ये

(सु०) पञ्चविधरूपकं कथयितुमाह—**गुणान्वितमिति**। वक्ष्यमाणगुणान्वितं दोषहीनं रूपकपञ्चकमुत्तमं ज्ञातव्यम्। नवेन रागेण धातुमत्त्वादिमिश्रतानि रूपकस्य नूतनत्वम्। तेषां नवत्वमाह—**रागांशेति**। रागांशभेदेन धातु-

प्रतिपाद्यविशेषेण रसालंकारभेदतः ।
लयग्रहविशेषेण तालानां नवता मता ॥ ३६३ ॥
तालविश्रामतो ऽन्येन विश्रामेण लयो नवः ।
छन्दोगणग्रहन्यासप्रबन्धावयवैर्नवैः ॥ ३६४ ॥
औडुवापरपर्याया रचना नवतां व्रजेत् ।

स्थायाः स्थायान्तराणि, तै रागेण रागो नवो भवति । पूर्वैः कृतरूपकगतरागापेक्षयेदानीं क्रियमाणे रूपके स्थायान्तरैर्यथा रागो नवो भवति तथा कर्तव्यमित्यर्थः । **रागांशभेदेने**ति । रागांशशब्देन रागान्तरस्यावयवो रागेंऽशः । स च सप्तवेति पूर्वोक्ताः स्थायभेदका रागावयवविशेषा उच्यन्ते । तद्भेदेन पूर्वोक्तरीत्या धातुर्नवः कर्तव्य इत्यर्थः । मातोर्नवत्वे निमित्तद्वयं दर्शयति—**प्रतिपाद्यविशेषेण रसालंकारभेदत** इति । प्रतिपाद्यं नाम वस्तु ; वाक्यार्थ इत्यर्थः । तद्भेदेन रसाः शृङ्गारादयः ; अलंकारा अनुप्रासोपमादयः ; तेषां भेदेन च मातुर्नवः कर्तव्य इत्यर्थः । तालानां नवत्वे निमित्तमाह—**लयग्रहे**ति । लया द्रुतमध्यविलम्बिताः ; ग्रहाः समातीतानागताः ; तेषां विशेषेण । **तालनां नवते**ति । पूर्वगीतगतात्तालाद्भिन्नलयग्रहस्तालः कर्तव्य इत्यर्थः । लयस्य नवत्वे हेतुमाह—**तालविश्रामत** इति । तालस्यावयविनो विश्रामादन्येन विश्रामेणावयवविश्रामेण विपर्ययेण वा लयो नवो भवति । औडुवनवत्वे हेतुमाह—**छन्दोगणे**ति । छन्दःप्रभृतीनि प्रागुक्तरूपाणि । **औडुवापरपर्याये**ति । औडुवमित्यपरः पर्यायो

र्नवोभवति । रसालंकारभेदेन मातुर्नवो भवति । लयग्रहभेदेन तालो नवः । तालो विश्रामस्य तुल्येन साम्येन विश्रामेण वा लयो नवः । छन्द आदिभिर्नवैरचना नवा भवति । उत्तमरूपकस्य त्रैविध्यमाह—रूपक इति । अधमरूपकस्य त्रैविध्यमाह—खल्लोत्तारेति । पञ्चानां लक्षणमाह—रूपकमिति । पूर्व-

रूपकं त्रिविधं ज्ञेयं परिवृत्तं पटान्तरम् ॥ ३६५ ॥
भञ्जनीसंश्रितं चेति शार्ङ्गदेवेन कीर्तितम् ।
खल्लोचारानुसारौ तु रूपकेष्वधमौ मतौ ॥ ३६६ ॥
रूपकं पूर्वसंसिद्धं स्वस्थानेन नवेन यत् ।
यद्वा रागेण तालेन कृतं तत्परिवृत्तकम् ॥ ३६७ ॥
यत्र स्थायिनि यत्स्थानं रूपकं रचितं पुरा ।
तत्स्वस्थानं तदन्यत्त्वं स्थाय्यैव परिवर्तनम् ॥ ३६८ ॥
परिवृत्तं रागतालपरिवर्तभवं स्फुटम् ।
तस्मिन्नेव रसे रागे ताले च रचितं भवेत् ॥ ३६९ ॥
मातुस्थायविचित्रत्वाद्गुणोदारं पटान्तरम् ।

यस्याः सा । एवंविधां रचनां कुर्यादित्यर्थः । अथ मध्यमरूपभेदानाह— **रूपकं त्रिविधमित्यादि** । खल्लोचारोऽनुसारश्चेत्यधमरूपकभेदौ । परिवृत्तादीनां लक्षणानि गुणदोषाणां च लक्षणानि स्पष्टार्थानि ॥ ३६१–३७९- ॥

एवं प्रबन्धसामान्यविशेषाश्रितलक्षणम् ।
चतुरः कल्लिनाथार्यः प्रत्येकं प्रत्यपादयत् ॥ १ ॥

इति श्रीमदभिनवभरताचार्यरायवयकारतोडरमल्लश्रीमल्लक्ष्मणाचार्यनन्दन-
चतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ
चतुर्थः प्रबन्धाध्यायः ॥ ४ ॥

सिद्धेन स्वस्थानकेन नवेन रागेण तालेन वा यत्क्रियते तत्परिवृत्तकम् ; यत्र रूपके स्थायिनि स्वरे स्वस्थानं पूर्वं तस्मिन्नेव स्थायिनि रागतालपरिवर्तन स्वस्थानावृत्तिस्तत्परिवर्तनम् ॥ पटान्तरं लक्षयति—तस्मिन्निति । भञ्जनीसंज्ञितं

केनापि रूपकं गीतं निजादन्येन धातुना ॥ ३७० ॥
येन तस्यान्यधातुत्वाद्भञ्जनीसंश्रितं मतम् ।
प्राग्रूपकगता स्थायाः स्थानान्तरगता यदि ॥ ३७१ ॥
मात्वन्तरेण रच्यन्ते खल्लोत्तारस्तदा भवेत् ।
रागे ताले च तत्रैव किंचिद्धातुविलक्षणः ॥ ३७२ ॥
मात्वन्तरेणानुसारो गुणोत्कर्षविवर्जितः ।
व्यक्तं पूर्णं प्रसन्नं च सुकुमारमलंकृतम् ॥ ३७३ ॥
समं सुरक्तं श्लक्ष्णं च विकृष्टं मधुरं तथा ।
दशैते स्युर्गुणा गीते तत्र व्यक्तं स्फुटैः स्वरैः ॥ ३७४ ॥
प्रकृतिप्रत्ययैश्चोक्तं छन्दोरागपदैः स्वरैः ।
पूर्णं पूर्णाङ्गगमकं प्रसन्नं प्रकटार्थकम् ॥ ३७५ ॥
सुकुमारं कण्ठभवं त्रिस्थानोत्थमलंकृतम् ।
समवर्णलयस्थानं सममित्यभिधीयते ॥ ३७६ ॥
सुरक्तं वल्लकीवंशकण्ठध्वन्यैकतायुतम् ।
नीचोच्चद्रुतमध्यादौ श्लक्ष्णत्वे श्लक्ष्णमुच्यते ॥ ३७७ ॥
उच्चैरुच्चारणादुक्तं विकृष्टं भरतादिभिः ।
मधुरं धुर्यलावण्यपूर्णं जनमनोहरम् ॥ ३७८ ॥

लक्षयति—केनापीति । खल्लोत्तारं लक्षयति—प्रागिति । रूपकान्तरगता स्थाया मात्रन्तरे निवेश्यते चेत्तदा खल्लोत्तारः । स एव किंचिद्धातुविलक्षणश्चेदनुसारः ॥ ३६१–३७२- ॥ इति पञ्चरूपकलक्षणम् ॥

(सु०) गीतगुणान् कथयति—व्यक्तमिति । व्यक्तादयो दश गुणा भवन्ति । तेषां लक्षणं कथयति—तत्रेति । सुगमम् ॥ गीतदोषानाह—

दुष्टं लोकेन शास्त्रेण श्रुतिकालविरोधि च ।
पुनरुक्तं कलाबाह्यं गतक्रममपार्थकम् ॥ २७९ ॥
ग्राम्यं संदिग्धमित्येवं दशधा गीतदुष्टता ।

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढल-
देवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीत-
रत्नाकरे प्रबन्धाध्यायश्चतुर्थः ॥ ४ ॥

दुष्टमिति । लोकेन शास्त्रेण च दुष्टत्वम्; श्रुतिविरोधि हीनश्रुतित्वम् ; कालविरोधि निषिद्धकाले गानम् ; ॥ -२७३–२७९- ॥ इति गीतदोषाः ॥

इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगण्डभैरवश्रीअनपोतनरेन्द्रनन्दनभुजबल-
भीमश्रीसिंहभूपालविरचितायां संगीतरत्नाकरटीकायां
संगीतसुधाकराख्यायां प्रबन्धाध्यायः समाप्तः ॥

---

# श्लोकानामर्धानुक्रमणिका

पृष्ठसंख्या

# शोधनम्

| पृ० | पं० | |
|---|---|---|
| ७ | १ | षड्जग्रामसमुत्पन्ना: |
| १७ | ६ | आडीकामोदिका |
| ९४ | १२ | सन्यासांशग्रहा |
| ९८ | ४ | सन्यासांशग्रहं |
| १०७ | १८ | सन्यासांशग्रहा |
| ११२ | २४ | ककुभभाषा: |
| ११५ | १ | रागस्यावयव: |
| १८५ | १० | ०काध्याय० |
| १९४ | ३ | प्रबन्धः |
| २०० | १ | प्रयोगोऽन्य: |
| ,, | ८ | अन्यो विधातव्य: |
| २३० | ६ | तृतीयेऽङ्घ्री |
| २४० | २२ | द्विर्यत्रेत्याविना |
| २५१ | ५ | गौडीयरीति० |
| २६१ | २२ | नरपशुः |
| २६० | १४ | भवति |
| २८३ | १ | परार्थानुमाने |
| २८८ | १७ | प्रयोक्त० |
| २९५ | १५ | पगापा लघु: |
| २९६ | ६ | त्रिपथ- |
| ,, | २१ | लभन्ते द० |
| ३२२ | २० | पद्मविध० |
| ३२८ | ३३ | सिता |
| ३३५ | ३० | तत्सुशरीर० |

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, S. India)

| | | Rs. A. |
|---|---|---|
| **1910** | | |
| 1. | A PRELIMINARY LIST OF THE SAṂSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṃskṛt-Devanāgarī) Boards ... | 1 8 |
| | Cloth ... | 2 0 |
| **1912** | | |
| 2. | A DESCRIPTIVE CATALOGUE OF THE SAṂSKṚT MSS. in the Adyar Library. *By* F. O. Schrader, Ph.D., Vol. I, Upaniṣads Cloth ... | 5 0 |
| 3. | THE MINOR UPANIṢADS (Saṃskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Ph.D., Vol. I—Saṃnyāsa Cloth ... | 10 0 |
| **1916** | | |
| 4. | AHIRBUDHNYA-SAṂHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṃskṛt), Edited under the supervision of F. O. Schrader, Ph.D., 2 Vols. Cloth ... | 10 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṂHITĀ. *By* F. O. Schrader, Ph.D. Cloth ... | 3 0 |
| **1920** | | |
| 6. | YOGA UPANIṢADS—20—with the Commentary of Śrī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. ... | 5 0 |
| **1921** | | |
| 7. | SĀMĀNYA VEDĀNTA UPANIṢADS—24—with the Commentary of Śrī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. ... | 5 0 |
| **1923** | | |
| 8. | VAIṢṆAVA UPANIṢADS—14—with the Commentary of Śrī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. ... | 4 0 |
| **1925** | | |
| 9. | ŚAIVA UPANIṢADS—15—with the Commentary of Śrī Upaniṣad Brahma Yogin. Edited *by* A. Mahadeva Sastri, B.A. ... | 3 0 |
| 10. | ŚĀKTA UPANIṢADS—8—with the Commentary of Śrī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. ... | 2 8 |
| **1926** | | |
| 11. | CATALOGUE OF SAṂSKṚT MSS. in the Adyar Library (revised). Edited *by* the Paṇḍits of the Adyar Library under the direction of Prof. C. Kunhan Raja, M.A., D. Phil.(Oxon.), 2 Vols. Each ... | 3 12 |

Rs. A

## 1929

12. SAṂNYĀSA UPANIṢADS—17—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* T. R. Chintamani, M.A., and the Paṇḍits of the Adyar Library, under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... 4 0

13. RUKMIṆĪ KALYĀṆA MAHĀ KĀVYA by Rājacūḍāmaṇi Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and Mr. T. R. Chintamani, M.A., under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... 2 0

## 1933

14. UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library, under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... 5 0

## 1936

15. TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.)

    Is'a to Aitareya, Vol. I ... 4 8
    Chāndogya and Bṛhadāraṇyaka, Vol. II ... 6 0
    Vol. I Boards } ... 9 8
    Vol. II ,, }

## 1937

16. MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. ... 2 0

## 1938

17. SAṂGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. with a critical Introduction in English *by* T. R. Srinivasa Aiyangar, B.A., L.T. ... 5 0

18. PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes by K. F. Leidecker, M.A., Ph.D.; Text edited *by* the Staff of the Adyar Library under the direction of Dr. G. Srinivasa Murti, B.A., B.L., M.B. & C.M., Vaidyaratna, Hon. Director, Adyar Library. ... 3 0

19. BHAVASAÑKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṂKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha—with English Translation *by* Paṇḍit N. Aiyaswami Sastri, Tirupati. ... 2 4

20. YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, B.A., L.T., and Paṇḍit S. Subrahmanya Sastri, F.T.S. ... 5 0

Rs. A.

21. * Where Theosophy and Science Meet (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga, M.A., I.E.S. (Retd.)

| | | | |
|---|---|---|---|
| Part 1. Nature—From Macrocosm to Microcosm | ... | 2 | 8 |
| Part 2. Man—From Atom to Man | ... | 2 | 8 |
| Part 3. God—From Humanity to Divinity | ... | 2 | 8 |
| Part 4. Some Practical Applications | ... | 2 | 8 |

## 1939

22. Ṛgvedavyākhyā, Mādhavakṛtā—Edited *by* Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) Vol. I. ... 6 0

## 1940

23. The Number of Rasas. *By* V. Raghavan, M.A., Ph. D., Department of Saṃskṛt, University of Madras, with a Foreword by Prof. M. Hiriyanna, M.A., formerly Professor of Saṃskṛt Maharajah's College, Mysore ... 3 0

## 1941

24. Sāmānya Vedānta Upaniṣads—Translated into English *by* T. R. Srinivasa Aiyangar, B.A., L.T., and Paṇḍit S. Subrahmanya Sastri, F.T.S. ... 5 0

25. Bhagavadgītārthaprakāśikā of Upaniṣad Brahmayogin (Saṃskṛt). Edited *by* the Paṇḍits of the Adyar Library with an Introduction by Prof. C. Kunhan Raja, M.A., D.Phil. (Oxon.) ... 4 0

26. Sāmaveda-Saṃhitā—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... 6 0

27. Rāja Dharma (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar, M.A. ... 3 8

28. Varivasyārahasyam of Bhāsurānandanātha (2nd Edition) by Paṇḍit S. Subrahmanya Sastri, F.T.S. (with English Translation) ... 2 8

29. Vyavahāranirṇaya of Varadarāja—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A. N. Krishna Aiyangar, M.A., L.T., Adyar Library with a FOREWORD *by* Sir P. S. Sivaswamy Aiyer, K.C.S.I., C.I.E., LL.D. ... 15 0

30. Saṃgītaratnākara—With the Commentaries of Catura Kallinātha and Siṃhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. Vol. I. (Adhyāya 1) ... 9 0

** Published under the auspices of the Adyar Library Association.*

Rs. A.

## 1942

31. Catalogue of the Adyar Library, Western Section part 1—prepared under the direction of Bhikshu Arya Asanga, Jt. Director and Curator, Western Section, Adyar Library ... 5 0
32. Ālambanaparīkṣā and Vṛtti *by* Diṅnāga with English translation, Tibetan text etc. by Paṇḍit N. Aiyaswami Sastri, Tirupati 3 8
33. Some Concepts of Alaṅkāra Śāstra *by* V. Raghavan, M.A., Ph. D., University of Madras ... 4 0
34. Vedāntaparibhāṣā—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri, M.A., B.Sc. (Oxon.), Bar-at-Law, Reader, Head of the Department of Philosophy, University of Madras. ... 2 12
35. A Descriptive Catalogue of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma, M.O.L., under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) Vol. I—Vedic ... 15 0
36. Śrī Pāñcarātra Rakṣā of Śrī Vedānta Deśika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta Śiromaṇi T. Venugopalacharya; with an Introduction in English by G. Srinivasa Murti, Hon. Director, Adyar Library. ... 4 8
37. Catalogue of the Adyar Library, Western Section, part 2, prepared under the direction of Bhikshu Arya Asanga, Jt. Director and Curator, Western Section. ... 6 0
38. Caturdaśalakṣaṇī of Gadādhara with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... 4 8

## 1943

39. Philosophy of Viśiṣṭādvaita by Prof. P. N. Srinivasachari, M.A., Retired Principal, Pachaiyappa's College, Madras ... 10 0
40. Vādāvalī of Jayatīrtha with English translation and Notes by P. Nagaraja Rao, M.A. Sir Sayaji Rao Fellow, Benares Hindu University ... 4 0
41. Spinozian Wisdom or Natural Religion *by* James Arther ... 2 12
42. Uṣāniruddha of Rāma Pāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. and Prof. C. Kunhan Raja, M.A., D.Phil. (Oxon.) ... 3 8
43. Saṃgītaratnākara—With the Commentaries of Catura Kallinātha and Siṃhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, F. T. S. Vol. II. (Adhyāyas 2—4) ... 9 0

# PAMPHLETS

## 1939

A Variant Version of the Ekāgnikāṇḍa. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 3

Rs. A.

## 1940

THE RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 4

## 1942

THE ṢAT PAÑCĀŚIKĀ, a Silpas'āstra manual. (Reprinted from the Adyar Library Bulletin, February 1942). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 5

THE PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 6

A List of Manuscripts (Reprinted from the Adyar Library Bulletin Oct., 1942) ... 1 0

THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale, M.A., D.Lit. 0 6

## 1943

VIS'EṢĀMṚTA of Tryambaka Mis'ra. Edited *by* H. G. Narahari, M.A. (Reprinted from the Adyar Library Bulletin, May, 1943). ... 0 12

A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Dr. C. Kunhan Raja, M.A., D.Phil. (Oxon.) Reprinted from the Adyar Library Bulletin, Oct. 1940, May and October, 1943 ... 0 12

## IN THE PRESS

1. ĀS'VALĀYANAGṚHYA-SŪTRA—With Devasvāmi Bhāṣya—Edited by Swami Ravi Tirtha.
2. ĀS'VALĀYANAGṚHYA-SŪTRA (Bhāṣya of Devasvāmi) Translated into English *by* A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.
3. JĪVĀNANDANAM OF ĀNANDARĀYAMAKHI with a Commentary by Vaidyaratna Paṇḍit M. Duraiswami Aiyangar. Edited *by* Vaidyaratna G. Srinivasa Murti, B.A., B.L., M. B. & C. M. and Vaidyaratna Paṇḍit M. Duraiswami Aiyangar.
4. VAIṢṆAVA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar, B.A., L.T. and Dr. G. Srinivasa Murti, Hon. Director, Adyar Library.
5. NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Swami Ravi Tirtha.
6. THE ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.
7. THE ACYUTARĀYĀBHYUDAYAM of Rājanātha Ḍiṇḍima—Sargas 7 to 12—*by* A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

8. GAUTAMASMṚTI—Edited by A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

9. KĀLĀDARŚA OF ĀDITYA BHAṬṬA—Edited by Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A. N. Krishna Aiyangar, M.A., L.T., Adyar Library

10. PARṢATĀ OF GADĀDHARA—with four commentaries by Paṇḍit N. Santanam Aiyar

11. HORĀŚĀSTRA—with the commentary Apūrvārthapradarśikā by A. N. Srinivasaraghava Aiyangar, M.A., L.T.

12. VIṢṆUSMṚTI—With the Keśava Vaijayanti of Nanda Paṇḍita. Edited by Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

13. CATURDAŚALAKṢAṆI OF GADĀDHARA with three commentaries. Vol. II and III. by Paṇḍit N. Santanam Aiyar.

14. SAṂGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṃhabhūpāla. Edited by Pandit S. Subrahmanya Sastri, F.T.S. Vol III. (Adhyāyas 5, 6 and 7).

15. UNMATTARĀGHAVA OF VIRUPĀKṢA—Edited by Paṇḍit V. Krishnamacharya, and A. N. Krishna Aiyangar M.A., L.T. Adyar Library.

16. ŚALISTAMBHASŪTRA—Restored from Tibetan and Chinese Sources—by Paṇḍit N. Aiyaswami Sastri.

---

## WORKS UNDER PREPARATION

1. AVAYAVA OF GADĀDHARA—with commentaries by Paṇḍit N. Santanam Aiyar.

2. VṚTTARATNĀVALĪ—with commentary, English Translation and Notes by H. G. Narahari, M.A., Adyar Library.

3. SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited by Paṇḍit N. Santanam Aiyar.

4. SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited by Paṇḍit N. Santanam Aiyar.

5. VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited by Paṇḍit N. Santanam Aiyar.

